विशेषप्राबल्यात् नास्ति व्याघातः कुतः अर्थविशेषस्य इन्द्रियार्थस्य प्राबल्यात् तथा चेन्द्रियार्थसन्निकर्षप्राधान्यार्थं हि पूर्वमुक्तं नत्वितरनिषेधार्थमिति ॥ २७ ॥

ननु सति प्रत्यक्षस्य प्रमाणान्तरत्वे तल्लक्षणपरीक्षासञ्चरते तदेव तु नास्तीत्याशङ्कते । प्रत्यक्षत्वेनाभिमतं घटादिज्ञानमनुमानमनुमितिरेकदेशस्य पुरोभागस्य ग्रहणानन्तरमुपलब्धेस्तथाचैकदेशग्रहणात्मकलिङ्गज्ञानजन्यत्वाद् घटादिज्ञानमनुमितिरित्यर्थः ॥ २८ ॥

समाधत्ते । प्रत्यक्षमनुमानमिति न प्रत्यक्षत्वावच्छेदेनानुमितित्वं नेत्यर्थः । यावत्तावदुपलम्भात् यावत्तावतोऽपि यस्य कस्यचिद्भागस्य प्रत्यक्षेणेन्द्रियेणोपलम्भादुपलम्भस्य त्वयाप्यभ्युपगमात् इदमुपलक्षणं शब्दगन्धादिप्रत्यक्षस्यावारणात् न प्रत्यक्षमात्र निषेधइत्यपि बोध्यम् ॥ २९ ॥

यदपि वृक्षादिज्ञानस्यानुमितित्वमिति तदपि दूषयति । न च नवेत्यर्थः न चैकदेशस्यैवोपलब्धिरित्यपि युक्तं अवयविसद्भावात् यतोहि अवयव्यस्ति अतस्तदवयवप्रत्यक्षकालेऽवयविनोऽपि प्रत्यक्षं न व्याहतं तेनापि सह चक्षुः संयोगादिसत्त्वादिति भावः ॥ ३० ॥

समाप्तं प्रत्यक्षपरीक्षा प्रकरणम् ॥ १४ ॥

अवयविसद्भावादिति हेतुसाधनायोपेक्षातसङ्गत्यावयविप्रकरणमारभते । अत्र चावयविनि सन्देहः साध्यत्वादिति यथा श्रुतार्थो न सङ्गच्छते वह्न्यादौ व्यभिचारात्तस्मादयमर्थःअवयविनि साध्यत्वादसिद्धत्वात् सन्देहोऽवयविसद्भावादित्युक्तहेतोस्तथाच सन्दिग्धा सिद्धो हेतुरित्यर्थः तत्र च द्रव्यत्वं सर्वत्वं वा अणुत्वव्याप्यं न वेत्यादयोविप्रतिपत्तयः तत्र च सकम्पत्वाकम्पत्वरक्तत्वारक्तत्वावृतत्वानावृतत्वादिलक्षणविरुद्धधर्माध्यासादेको ऽवयवी न सम्भवति तथाहि शाखावच्छेदेन कम्पो मूलावच्छेदेन तदभावोऽप्युपलभ्यते न चैकस्मिन्नेव द्रव्ये एकदैव विरुद्धधर्मद्वयसमावेशः सम्भवति तस्मादवयवा एव तथाभूता नत्वन्योऽवयवी मानाभावात् एवं महारजनरक्तैकदेशस्यांशुकस्य दशावच्छेदेनारक्तत्वोपलम्भादेवं त्यावृत पृष्ठादेरनावृतत्वोपलम्भादवसेयं इति बौद्धानां पूर्वपक्षः अत्र

च बौद्धानां पूर्वपक्ष सूत्राणि वार्त्तिककृता लिखितानि च विस्तारभयान्न लिख्यन्ते ॥ ३१ ॥

सिद्धान्तसूत्रम्। अवयविनोऽसिद्धौ तद्गुणकर्म्मादीनां सर्वेषामग्रहणं तथा च सकम्पाकम्पत्वरक्तारक्तत्वादिकमपि न सुग्रहं परमाणुगतत्वात् प्रत्यक्षे महत्त्वस्य हेतुत्वात् ॥ ३२ ॥

हेत्वन्तरमाह। अवयवेभ्योऽवयव्यतिरिच्यते तथा सति धारणाकर्षणयोरुपपत्तेरन्यथा परमाणु पुञ्जत्वे चैकदेशधारणेन सकलधारण मेकदेशाकर्षणेन सकलाकर्षणञ्च न स्यादित्यर्थः ॥ ३३ ॥

इदमवद्यं नौकाघर्षणेन नौकास्थाकर्षणवत् कुण्डधारणेन कुण्डस्यदधिधारणवच्चोपपत्तेर्विजातीयसंयोगबलेनैवावयवावयविभावाभावेऽप्युपपत्तेरतः पूर्व्वोक्तां युक्तिमेव साधीयसीं मन्यमानस्तत्र परोक्तं समाधानमाशङ्क्य दूषयति। अतिदूरस्थैकमनुष्यैकवृक्षादेरप्रत्यक्षत्वेऽपि सेनावनादि प्रत्यक्षवदेकपरमाणोरप्रत्यक्षत्वेऽपि तत्समूहरूपघटादेः प्रत्यक्षं स्यादिति चेन्न तदपि अणूनामतीन्द्रियत्वात् प्रत्यक्षे महत्त्वस्य हेतुत्वात्तत्सत्त्वात्सेनावनादि प्रत्यक्षं युज्यते नत्वणूनां महत्त्वाभावादिति भावः ॥३४॥

समाप्तमवयविपरीक्षा प्रकरणम् ॥ १५ ॥

अवसरेण क्रमप्राप्तमनुमानं परीक्षितुं पूर्वपक्षयति। अनुमानस्य त्रैविध्यं पूर्वमुक्तं तत्र त्रिविधस्याप्रामाण्ये साधितेऽनुमानमप्रमाणमर्थात्सिद्धमित्याशयेनेदं अनुमानं अनुमानत्वेनाभिमतं न प्रमाणं प्रमितिकरणं व्यभिचारिहेतुकत्वात् तत्र त्रिविधे व्यभिचारं दर्शयति रोधेत्यादिना नदीवृद्ध्या पिपीलिकाण्डसञ्चारेण मयूररुतेन च वृष्ट्यनुमानं त्रिविधमुदाहरणं न सम्भवति नदीरोधाधीननदीवृद्ध्या आश्रमोपघाताधीनपिपीलिकाण्डसञ्चारेण मनुष्यकर्त्तृकमयूररुतसदृशरुतेन व्यभिचारात् पिपीलिकाण्डसञ्चारस्य वृष्टिहेतुत्वाभिप्रायेणेदं अथवा लक्षणसूत्रे पूर्ववत् पूर्वकालीन साध्यानुमापकं शेषवदुत्तरकालीन साध्यानुमापकं सामान्यतो दृष्टं विद्यमानसाध्यस्याप्यनुमापकमित्यर्थ इत्याशयः एतेन त्रैकालिकसाध्यानुमापकत्वं सम्भवति परेतु पिपीलिकाण्डसञ्चारेणात्यन्तोष्मानुमानं ततस्च महाभूतक्षोभानुमानं तस्य च वृष्टिहेतुत्वात्तेन वृष्ट्यनुमान-

मिति वदन्ति एवमन्यत्रापि व्यभिचारशङ्कासम्भवादव्यभिचारनिश्चयस्या-नुमितिहेतोरेव दुर्लभत्वात्तत्प्रामाण्यं न सम्भवतीत्याशयः ॥ ३५ ॥

समाधत्ते। अनुमानाप्रामाण्यं न युक्तं एकदेशरोधजनदीवृद्धे स्त्रासज-पिपीलिकाण्डसञ्चारात् मयूररुतसदृशरुतानां लिङ्गीभूतानां नदीवृद्ध्यादीनां भिन्नत्वान्न दोषः न च सर्वत्र व्यभिचारशङ्का सत्यात्र तस्मात्तर्केण तद-पनयनान्न दोष इत्याशयः ॥ ३६ ॥ समाप्तमनुमानपरीक्षा प्रकरणम् ॥ १६ ॥

अनुमानस्य त्रिकालविषयत्वमभिमतं तन्न युक्तं वर्त्तमानाभावेन तद-धीनज्ञानयोरतीतानागतयोरभावेन कालत्रयात्मकविषयाभावादित्याश-येनैव वर्त्तमानपरीक्षाप्रकरणमारभमाणो वर्त्तमानमाक्षिपते। वर्त्तमानाभावः अतीतानागतभिन्नो कालत्वाभावः व्युत्पादयति पतत इति पततः फलादे-र्ह्यवधिकः कश्चन देशः पतिताध्वा भूम्यवधिकः कश्चन पतितव्याध्वा न तु वर्त्तमानस्य प्रसङ्गोऽपीति भावः ॥ ३७ ॥

समाधत्ते। वर्त्तमानाभावे तयोरतीतानागतयोरप्यभावः स्यात्तयो-स्तदपेक्षत्वात् वर्त्तमानध्वंसप्रतियोगित्वं ह्यतीतत्वं वर्त्तमान प्रागभाव-प्रतियोगित्वं ह्यनागतत्वमिति भावः ॥ ३८ ॥

ननु तयोः परस्परापेक्षयैव सिद्धेर्न वर्त्तमानापेक्षेत्यत आह। अन्यो-न्याश्रयादिति भावः ॥ ३९ ॥

तयोरप्यभावे का क्षतिरतो युक्त्यन्तरमाह। वर्त्तमानाभावे प्रत्यक्षं नोपपद्यते प्रत्यक्षस्य वर्त्तमानविषयत्वात् अतएवाह सम्बद्धं वर्त्तमानञ्च गृह्यते चक्षुरादिनेति प्रत्यक्षाभावे च सर्वमेव ग्रहणं ज्ञानं न स्यात् प्रत्यक्षमूलकत्वादितरज्ञानानामिति भावः ॥ ४० ॥

ननु यदि वर्त्तमानध्वंसप्रतियोगित्वमतीतत्वं वर्त्तमानप्रागभावप्रति-योगित्वञ्च भविष्यत्त्वं तदा वर्त्तमान एव घटे कथं श्याम आसीद्रक्तो भवि-ष्यतीति धीरत आह। वर्त्तमानस्यापि घटादेः श्यामरक्तरूपादीनां कृतता कर्त्तव्यतयोरतीतता भविष्यत्तयोरूपपत्तेर्घटादेरप्यतीतानागतत्वेन व्यव-हारः परम्परासम्बन्धादित्यर्थः ॥ ४१ ॥

समाप्तं वर्त्तमानपरीक्षाप्रकरणम् ॥ १७

अथावसरेण क्रमप्राप्तोपमानं परीक्षितुं पूर्वपक्षयति। प्रसिद्धसाधर्म्या-

दुपमानमुक्तं तन्न युक्तं यतः साधर्म्यमात्यन्तिकं प्रायिकमैकदेशिकं वा न सम्भवति न हि आत्यन्तिकसाधर्म्येण गौरिव गौरित्युपमानं प्रवर्त्तते न वा प्रायिकसाधर्म्येण गौरिव महिष इति न च यत्किञ्चित्साधर्म्येण मेरुरिव सर्षप इति साधर्म्यस्य चोपलक्षणत्वाद्वैधर्म्योपमानमप्येवं खण्डनीयम् ॥४२॥

समाधत्ते । प्रसिद्धं प्रकर्षेण महिषादिव्यावृत्त्या सिद्धं ज्ञातं यत्साधर्म्यं तज्ज्ञानस्योपमितिकरणत्वान्न दोषः साधर्म्यञ्च प्रकरणाद्यनुसारात्क्वचित्किञ्चिदिति ॥ ४३ ॥

अनुमानेन चरितार्थं नोपमानं प्रमाणान्तरमिति वैशेषिकमतमाशङ्कते। प्रत्यक्षेण गोसादृश्यविशेषेण अप्रत्यक्षस्य गवयपदवाच्यत्वस्यानुमितेर्नोपमानं मानान्तरमिति ॥ ४४ ॥

अत्रोत्तरयति। अप्रत्यक्षे व्याप्यवत्तयाऽप्रत्यक्षे अनुमानत्वेन प्रमाणार्थं प्रमाप्रयोजन मुपमानस्य न पश्याम इत्यर्थः अथवा गवये गवयशक्तौ अप्रत्यक्षे गवयपदवाच्यत्वे उपमानस्य प्रमाणार्थं प्रमां उपमानजन्यां प्रमां अनुमानत्वेन न पश्यामइत्यर्थः व्याप्तिज्ञानाभावादिति भावः ॥ ४५ ॥

ननु व्याप्तिज्ञाननियमः कल्पतामित्यनुशयेन युक्त्यन्तरमाह। अनुमानादुपमानस्य नाविशेषः तथेत्युपसंहारात् यथा गौस्तथा गवय इति ज्ञानादुपमानसिद्धेरुपमानाधीनसिद्धेरुपमितेः तथा च व्याप्तिज्ञानानपेक्षसादृश्यज्ञानाधीनोपमिति रित्यनुभवसिद्धं किञ्च नानुमिनोमि किन्तूपमिनोमीत्यनुव्यवसायसिद्धोपमितिर्नापलपितुं शक्यत इत्याशयः ॥४६॥

समाप्तमुपमानप्रामाण्यपरीक्षाप्रकरणम् ॥ १७ ॥

क्रमप्राप्तं शब्दं परीक्षितुं पूर्वपक्षयति । शब्दोऽनुमानमित्यस्य शाब्दबोधोऽनुमितिरिति पर्यवसितार्थस्तथा च शब्दो लिङ्गविधयानुमितिकरणं अर्थस्य शब्द प्रतिपाद्यस्य अनुपलब्धेरप्रत्यक्षत्वात् अनुमेयत्वादिति तथा च शाब्दज्ञानमनुमितिरप्रत्यक्षविषयत्वात् प्रत्यक्षभिन्नत्वाद्वेत्यत्र तात्पर्यम् ॥ ४७ ॥

हेत्वन्तरमाह। उपलब्धेः शाब्दबोधत्वेनाभिमताया अनुमितित्वेनाभिमतायाश्च अद्विप्रवृत्तित्वात् अद्विप्रकारत्वात् अनुमितित्वं शाब्दत्वञ्च न

जातिद्वयं शब्दस्य लिङ्गविधया बोधकत्वाल्लिङ्गान्तरजन्यान वह्निजातीयत्वाभावात् ॥ ४८ ॥

हेत्वन्तरमाह । सम्बन्धान्नियतसम्बन्धात् ज्ञायमानादिति शेषः शब्दो हि व्याप्तिग्रहसापेक्षो बोधयति तेन शाब्दबोधोऽनुमितिरिति भावः ॥ ४९ ॥

सिद्धान्तसूत्रम् । आप्तस्य भ्रमादिशून्यस्य य उपदेशः शब्दस्तत्र यत्सामर्थ्यं आकाङ्क्षायोग्यतादिमत्त्वं ततः अथवा आप्तं प्राप्तं यदुपदेशसामर्थ्यं आकाङ्क्षादिमत्त्वं ततः तत्प्रकारात्माधारणश्चायं निर्देशस्तेन व्याप्तिनिरपेक्षादाकाङ्क्षादिज्ञानादर्थे सम्प्रत्ययः शाब्दबोधः सम्भवतीति नानुमानान्तर्भावः शब्दस्येत्यर्थः शब्दादमुमर्थं प्रत्येमि नत्वनुमिनोमीत्यनुभवादिति भावः ॥ ५० ॥

शब्दार्थयोः सम्बन्धाभाव इत्यप्याह । शब्देन सहार्थस्य सम्बन्धाभावः व्याप्त्यभावः हेतुमाह पूरणेति, यदि शब्दस्यार्थेन व्याप्तिः स्यात्तदा ज्ञाग्निवासीशब्दैर्मुखपूरणमुखप्रदाहमुखपाटनानि स्युः शब्दस्य व्याप्यस्य सत्वेनान्नादेरर्थस्यापि सत्त्वात् ॥ ५२ ॥

तत्किं शब्दोऽसम्बद्धमेवार्थं प्रत्याययति तथा सत्यतिप्रसङ्ग इत्याशङ्कते । अप्रतिषेधः शब्दार्थयोः सम्बन्धप्रतिषेधो न शब्दार्थयोर्व्यवस्थितत्वात्कस्मिदेव हि शब्दः कश्चिदेवार्थं बोधयति न सर्वः सर्वमिति इत्यत्र सम्बन्धे स्वीक्रते तेन सम्बन्धेन व्याप्तिरप्यावश्यकी सच सम्बन्धो न मुखपूरणादिनियामक इति भावः ॥ ५३ ॥

उत्तरयति । मन्यतेऽपि शब्दार्थयोरव्यवस्था न शब्दाधीनस्यार्थसंप्रत्ययस्य सामयिकत्वात् शक्तिग्रहाधीनत्वात् शक्तिरूपसम्बन्धेन न च व्याप्तिस्तस्याद्दृष्टिनियामकसम्बन्धाधीनत्वादिति भावः ॥ ५४ ॥

शब्दस्यार्थेन सह न स्वाभाविकः सम्बन्धः जातिविशेषेऽनियमात् शब्दस्यानियतार्थकत्वदर्शनादार्य्या हि यवशब्दाद्दीर्घशूकविशेषं प्रतियन्ति म्लेच्छास्तु कङ्गुमिति नियमे तु सर्वः सर्वं प्रतीयात् आपाततश्चेदं नानाशक्तात्रपि यत्र यस्य शक्तिग्रहस्तस्य तदर्थोपस्थितेः ॥ ५५ ॥ समाप्तं शब्दसामान्यपरीक्षाप्रकरणम् ॥ १८ ॥

शब्दस्य दृष्टादृष्टार्थकत्वेन द्वैविध्यमुक्तं तत्र चादृष्टार्थकशब्दस्य वेदस्य प्रामाण्यं परीक्षितुं पूर्वपक्षयति। तस्य दृष्टार्थकव्यतिरिक्तशब्दस्य वेदस्य अप्रामाण्यं कुतः अनृतत्वादिदोषात् तत्र च पुत्रेष्टिकारी यागादौ क्वचित् फलानुत्पत्तिदर्शनादनृतत्वं व्याघातः पूर्व्वापरविरोधः यथा उदिते जुहोति अनुदिते जुहोति समयाध्युषिते जुहोति श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति शबलोऽस्याहुतिमभ्यवहरति योऽनुदिते जुहोति श्यावशबलावस्याहुतिमभ्यवहरतो यः समयाध्युषिते जुहोति अत्र चोदितादिवाक्यानां निन्दानुमितानिष्टसाधनताबोधकवाक्येन सह विरोधः पौनरुक्त्यादप्रामाण्यं यथा त्रिः प्रथमामन्वाह त्रिरुत्तमामन्वाहेत्यत्रोत्तमत्वस्य प्रथमत्व पर्य्यवसानात् त्रिःकथनेन पौनरुक्त्यं एतेषामप्रामाण्ये तद्दृष्टान्तेन तदेककर्त्तृकत्वेन तदेकजातीयत्वेन वा सर्ववेदाप्रामाण्यं साधनीयमिति भावः ॥ ५६ ॥

सिद्धान्तसूत्रम्। न वेदाप्रामाण्यं कर्म्मकर्त्तृसाधनवैगुण्यात् फलाभावोपपत्तेः कर्म्मणः क्रियाया वैगुण्यमयथाविधित्वादि कर्त्तुर्वैगुण्यमविद्वत्त्वादि साधनस्य हविरादेर्वैगुण्यमप्रोक्षितत्वादि यथोक्त कर्म्मणः फलाभावे ह्यनृतत्वं न चैवमस्तीति भावः ॥ ५७ ॥

व्याघातं परिहरति। न व्याघात इति शेषः अग्न्याधानकाले उदितहोमादिकमभ्युपेत्य स्वीकृत्यानुदितहोमादिकरणे पूर्व्वोक्तदोषकथनान्न व्याघात इत्यर्थः ॥ ५८ ॥

पौनरुक्त्यं परिहरति। च पुनरर्थे अनुवादोपपत्तेः पुनर्न पौनरुक्त्यं निष्प्रयोजनत्वे हि पौनरुक्त्यं दोष उक्तस्थले त्वनुवादस्य उपपत्तेः प्रयोजनस्य सम्भवात् एकादशसामधेनीनां प्रथमोत्तमयोः त्रिरभिधाने हि पञ्चदशत्वं सम्भवति तथा च पञ्चदशत्वं श्रूयते इममहं भ्रातृव्यं पञ्चदशावरेण वाग्वज्रेण च बाधे योऽस्मान्द्वेष्टि यञ्च वयं द्विष्म इति ॥ ५९ ॥

अनुवादस्य सार्थकत्वं लोकसिद्धमित्याह। वाक्यविभागस्य अनुवादत्वेन विभक्तवाक्यस्यार्थग्रहणात् प्रयोजनस्वीकारात् शिष्टैरिति शेषः शिष्टा हि विधायकानुवादकादिभेदेन वाक्यं विभज्यानुवादकस्यापि सप्रयोजनत्वं मन्यन्ते वेदेऽप्येवमिति भावः ॥ ६० ॥

वेदे वाक्यविभागं दर्शयति। मन्त्रब्राह्मणभेदाद्द्विधा वेदस्तत्र ब्राह्मणस्यायं विभागः विधिवचनत्वेनार्थवादवचनत्वेनानुवादवचनत्वेन च वेदस्य विनियोगात् विभजनात् अथवा विनियोगात् भेदात् तथा च विध्यादिभेदाद्ब्राह्मणभागस्त्रिधेति शेषः ॥ ६१ ॥

तत्र विधिलक्षणमाह । इष्टसाधनताबोधकप्रत्ययसमभिव्याहृतवाक्यं विधिः अग्निहोत्रं जुहुयात् स्वर्गकाम इत्यादि अर्थवादः अर्थस्य प्रयोजनस्य वदनं विध्यर्थप्रशंसापरं वचनमित्यर्थः अर्थवादो हि स्तुत्यादिद्वारा विध्यर्थं शीघ्रं प्रवृत्तये प्रशंसति ॥ ६२ ॥

तत्र स्तुत्यादिभेदादर्थवादं विभजते । स्तुतिः साक्षाद्विध्यर्थस्य प्रशंसार्थकं वाक्यं यथा सर्वजिता वै देवाः सर्वमजयन् सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाप्नोति सर्वं जयतीत्यादि अनिष्टबोधनद्वारा विध्यर्थप्रवर्त्तकं निन्दा एषवावप्रथमोयज्ञानां यज्ज्योतिष्टोमोय एतेनानिष्ट्वा अन्येन यजते स गर्त्ते पतत्ययमेवैतज्जीर्यते प्रवामीयत इत्यादि पुरुषविशेषनिष्ठमिथोविरुद्धकथनं परकृतिः यथा हुत्वा वपामेवाग्रेऽभिघारयन्त्यथ पृषदाज्यं तदुहचरकाध्वर्यवः पृषदाज्यमेवाग्रेऽभिघारयन्त्यग्नेः प्राणाः पृषदाज्यमित्यभिदधतीत्यादि ऐतिह्यसमाचरिततयाकीर्त्तनं पुराकल्पः यथा तस्माद्वा एतेनपुराब्राह्मणावहिः पवमानसामस्तो मम स्तौषन् यज्ञं प्रतनवामह इत्यादि ॥ ६३ ॥

अनुवादलक्षणमाह। प्राप्तस्य अनु पश्चात्कथनं स प्रयोजनमनुवाद इति सामान्यलक्षणं तद्विशेषोविधिविहितस्येति विध्यनुवादोविहितानुवादस्येत्यर्थः अयं चार्थवादानुवादविभागोविधिसमभिव्याहृतवाक्यानां तेन भूतार्थवादरूपाणां वेदान्तवाक्यानामपरिग्रहान्न न्यूनता ॥ ६४ ॥

शङ्कते। शब्दाभ्यासस्य बोधितार्थकशब्दस्य योऽभ्यासः पुनः प्रयोगस्तस्योपपत्तेः सत्वात् अनुवादः पुनरुक्तान्न भिद्यतइत्यर्थः ॥ ६५ ॥

समाधत्ते। अनुवादस्य पुनरुक्तान्नाविशेषः अभ्यासात् अभ्यासस्य सप्रयोजनत्वात् तत्र दृष्टान्तमाह शीघ्रेति यथा लोके गम्यतामित्युक्ता पुनर्गम्यतां गम्यतां इत्यादि कर्मोविलम्बादिबोधार्थमुच्यते तथा प्रकृतेऽपीति ॥ ६६ ॥

एवमप्रामाण्यसाधकं निरस्य प्रामाण्यं साधयति। आप्तस्य वेदकर्त्तुः प्रामाण्यात् यथार्थोपदेशकत्वात् वेदस्य तदुक्तत्वमर्थाल्लब्धं तेन हेतुना वेदस्य प्रामाण्यमनुमेयं तत्र दृष्टान्तमाह मन्त्रायुर्वेदवदिति मन्त्रोविषादिनाशकः आयुर्वेदभागश्च वेदस्य एव तत्र सम्वादेन प्रामाण्यग्रहात् तद्दृष्टान्तेन वेदत्वावच्छेदेन प्रामाण्यमनुमेयम् आप्तं गृहीतं प्रामाण्यं यत्र स वेदस्ता-दृशेन वेदत्वेन प्रामाण्यमनुमेयमिति केचित्॥ ६७॥

समाप्तं शब्दविशेषपरीक्षाप्रकरणम्॥ १८॥

इति श्रीविश्वनाथभट्टाचार्य्यकृतायां न्यायसूत्रवृत्तौ विभागपरी-
क्षानिरपेक्षसाङ्गप्रमाणपरीक्षणं नाम द्वितीयस्या-
ध्यायाह्निकम्॥ १॥

---

अथ विभागसापेक्षप्रमाणपरीक्षणं तदेवचाह्निकार्थः चत्वारि चात्र प्रकरणानि तत्रादौ चतुष्टपरीक्षाप्रकरणम्। अन्यानि च तत्र तत्र व-क्ष्यन्ते तत्राक्षेपसूत्रम्। प्रमाणानां न चतुष्टं प्रमाणत्वं नोक्तचतुष्कान्य-तमत्वव्याप्यं उक्तान्यवृत्तित्वात् तत्राप्यवृत्तित्वं व्युत्पादयति ऐतिह्येत्यादि ऐतिह्यं इति होचुरित्यनेन प्रकारेण यदुच्यते तद्धि अनिर्दिष्टप्रवक्तृकं परम्परागतं वाक्यं यथा वटे वटे यक्ष इत्यादि तस्य चाप्तोक्तत्वानिश्चयान्न शब्देऽन्तर्भाव इति भावः अर्थापत्तिरनुपपद्यमानेनार्थेनोपपादककल्पनं यथा वृष्ट्या मेघज्ञानं वृष्ट्या सह मेघस्य वैयधिकरण्यान्न व्याप्तिरिति नानुमाने-ऽन्तर्भावः सम्भवो भूयः सहचाराधीनज्ञानं यथा सम्भवति ब्राह्मणे विद्या-सम्भवति सहस्रे शतं अत्र च व्याप्तिर्नापेक्षितेत्याशयः अभावस्तु विरोध्य-भावज्ञानाधीनविरोध्यन्तरकल्पनं यथा नकुलाभावज्ञानेन नकुलविरो-धिनो व्यालस्य कल्पनम् अत्रापि व्याप्तिर्नापेक्षितेत्याशयः अथवा कार-णाभावादिना कार्य्याभावादिज्ञानम् अभावः भावनिष्ठव्याप्तिरेवानुमाना-ङ्गमित्याशयः॥ १॥

सिद्धान्तसूत्रम् । न प्रमाणचतुष्टयस्य प्रतिषेधः शब्दे ऐतिह्यस्या-र्थान्तरभावादन्तर्भावात्सामान्यत आप्तोक्तत्वज्ञानसम्भवादस्तु आप्तोक्तत्व-ज्ञानं न शाब्दे कारणं किन्त्वाकाङ्क्षादिज्ञानं योग्यताप्रमाधीना च शाब्द-प्रमेति अर्थापत्त्यादेरनुमानेऽन्तर्भावः उपपादककल्पनं हि विना व्याप्ति-ज्ञानं न सम्भवति वृष्टित्वादावपि मेघजन्यत्वव्याप्तिरस्त्येव सम्भवोऽपि व्याप्तिमूलकत्वादनुमानं व्याप्त्यनपेक्षित्वे च व्यभिचारादप्रमाणम् एव-मभावो व्याप्तिसापेक्षोऽनुमानम् अभावनिष्ठव्याप्तेश्चानुमानाङ्गत्वे न वि-रोध इति भावः ॥ २ ॥

सत्यर्थापत्तेः प्रामाण्ये वह्निर्भावान्तर्भावचिन्ता तदेव तु नास्तीति तटस्थः शङ्कते । असति मेघे वृष्टिर्न भवतीत्यनेन सति मेघे वृष्टिर्भवतीत्य-र्थापत्तिविषयस्तत्र च न प्रामाण्यं सत्यपि मेघे वृष्ट्यभावादनैकान्तिक-त्वात् ॥ ३ ॥

समाधत्ते । अर्थापत्तेर्नानैकान्तिकत्वमिति शेषः असत्सु मेघेषु न वृष्टिरित्यनेन सति मेघे वृष्टिरिति तत्र च वृष्ट्या मेघज्ञानमभिमतं यत्र च मेघे न वृष्टिज्ञानं तत्रानर्थापत्तावर्थापत्तिभ्रमः नचैतावता प्रामाण्यविरोधः व्याप्यादिभ्रमाद्भ्रमानुमिति दर्शनादनुमानस्याप्यप्रामाण्यापत्तेः नानै-कान्तिकत्वमर्थापत्तेरिति भाष्यस्यावतारणिकां सूत्रादौ केचिल्लिखन्ति ॥ ४

प्रतिबन्दिमप्याह । त्वदुक्तरीत्या त्वदीयप्रतिषेधस्याप्यप्रामाण्यं स्याद-नैकान्तिकत्वात् यत्र कुत्रचिदनैकान्तिकत्वस्य प्रतिषेधासाधकत्वादनैका-न्तिकत्वात् ॥ ५ ॥

अथ यत्र कुत्रचिदनैकान्तिकत्वं न दोषाय किन्तु स्वविषये इति यदि तदार्थापत्तेरपि नाप्रामाण्यमित्याह । अनैकान्तिकत्वस्य स्वविषये साध-कत्वाद्यदि स्वहेतोः प्रामाण्यं मन्यसे तदार्थापत्तेरपि स्वविषये प्रामाण्य-मिति ॥ ६ ॥

अभावस्य न प्रमाणेऽन्तर्भाव इति तटस्थः शङ्कते । अभावनामकं प्रमाणं तदा स्याद्यदि तस्य प्रमेय सिद्धेत्तदेव तु नास्ति अभावस्य तुच्छ-त्वान्न तत्र प्रमाणप्रवृत्तिरिति भावः ॥ ७ ॥

सिद्धान्तसूत्रम् । तस्याभावप्रमाणस्य प्रमेयसिद्धिः भावप्रधानो निर्देशः

किन्त्वप्रमेयमित्यत आह लक्षितेष्विति लक्षितेषु घटादिष्वलक्षितानां तत्-प्रमेयत्वसिद्धिः अलक्षितानां कथं प्रमेयत्वमत आह अलक्षणलक्षितत्वा-दिति यद्यप्यभावस्य गुणकर्म्मादिभिर्लक्षणं न सम्भवति तथाप्यलक्षणेनैव तल्लक्षितं भवति अनीलमानयेत्युक्ते नीलाभावो हि इतरव्यावर्त्तकतया लक्षणम् अतोऽभावोनाप्रामाणिक इति भावः॥ ८॥

आक्षिप्य समाधत्ते। असति प्रतियोगिन्यभावो वक्तुं न शक्यते सति च प्रतियोगिनि कथं तदभाव इति चेन्नान्यत्र लक्षणेन सत्त्वेनाथात्प्रति-योगिनः उपपत्तेरभावोपपत्तेः न हि तत्रैव प्रतियोगिनः सत्त्वमपे-क्षितम्॥ ९॥

शङ्कते। लक्षितेषु लक्षणस्य तत्सिद्धेः व्यावर्त्तकत्वसिद्धेरलक्षितेषु अभावेषु अहेतुः अहेतुत्वं व्याहत्यहेतुत्वम् अभावस्य लक्षणाभावान्निःस्व-रूपस्य न व्यावर्त्तकत्वमिति भावः॥ १०॥

समाधत्ते। पूर्वपक्षो न युक्तः प्रतियोगिनो लक्षणस्य यदवस्थित-मवस्थानं तस्यापेक्षाय तद्द्वयसिद्धेः अयमर्थः प्रतियोगिस्वरूपज्ञानादेवा-भावस्वरूपनिरूपणसम्भवान्नाभावलक्षणापेक्षेति भावः॥ ११॥

प्रमेयसिद्धिरिति। मण्डूकप्लुत्यानुवर्त्तते प्रतियोगिन उत्पत्तेः प्राक् अभावस्य उपपत्तेः उपलम्भात् घटो भविष्यतीत्यादिप्रागभावविषयकप्रत्य-क्षस्य सार्वलौकिकत्वादिति भावः चकारेण ध्वंसादेरपि प्रत्यक्षसिद्धत्वं समुच्चीयते चेष्टाया निर्व्यापारत्वेन न प्रामाण्यं वस्तुतो लिप्यादिवत्साङ्केति-कत्वात्तस्याप्यनुमाने शब्देवान्तर्भाव इति॥ १२॥

समाप्तं प्रमाणचतुष्टप्रकरणम्॥ २०॥

वेदस्य प्रामाण्यमाप्तप्रामाण्यात्सिद्धं न चेदं युज्यते वेदस्य नित्यत्वा-दित्याशङ्कायां वर्णानामनित्यत्वात् कथं तत्समुदायरूपस्य वेदस्य नित्यत्व-मित्याशयेन शब्दानित्यत्वप्रकरणमारभते तत्र सिद्धान्तसूत्रम्। शब्दोऽनित्य इत्यादिः आदिमत्त्वात् सकारणकत्वात् ननु न सकारणकत्वं कण्ठताल्वा-द्यभिघातादेर्व्यञ्जकत्वेनाप्युपपत्तेरत आह ऐन्द्रियकत्वादिति सामान्य-वत्त्वे सति बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वादित्यर्थः परे तु ऐन्द्रि-यकत्वं लौकिकप्रत्यक्षविशेष्यत्वं सामान्यसमवाययोस्तु न तथात्वं जाति-

त्वादिना विशेषत्वसम्भवेऽपि जातित्वादेरप्रत्यक्षत्वान्न व्यभिचारः मनस इन्द्रियत्वाभावाच्च नात्मनि व्यभिचार आत्मन ऐन्द्रियकत्वाभावादित्याहुः अप्रयोजकत्वमाशङ्क्याह कृतकेति कृतके घटादौ यथा उपचारो ज्ञानं तथैव कार्य्यत्वप्रकारकप्रत्यक्षविषयत्वादित्यर्थः तथा च कार्य्यत्वेनानाहार्य्य-सार्व्वलौकिकप्रत्यक्षबलादनित्यत्वमेव सिध्यति केचित्तु उपचाराद्विनाशित्वात् कृतकवत् इति दृष्टान्त इति परे तु कृतकवदुपचारात् कृतकसुख-दुःखादिवद्व्यवहारात् यथाहि सुखादौ तीव्रमन्दादिव्यवहारः शब्देऽप्येवं न तु नित्ये तथेत्याहुः ॥ १४ ॥

यथाश्रुते हेतूनां व्यभिचारमाशङ्कते । नोक्ता हेतवः घटाभावस्य घटध्वंसस्य नित्यत्वादविनाशित्वादादिमत्त्वं व्यभिचारि ऐन्द्रियकत्वं सा-मान्ये व्यभिचारिनित्येष्वप्यनित्यवदुपचारात् यथा घटाकाशमुत्पन्नम् अहं सुखीजात इत्यादि ॥ १५ ॥

प्रथमे व्यभिचारं परिहरति । तत्त्वस्य पारमार्थिकस्य भाक्तस्य च नानात्वस्य भेदस्य विभागात् विवेकान्न व्यभिचारः ध्वंसे हि उत्पत्ति-मत्त्वलक्षणम् आदिमत्त्वं त्रैकालिकत्वरूपनित्यत्वाभावरूपञ्चानित्यत्वम-स्त्येवाविनाशित्वान्नित्यत्वमौपचारिकमतो न व्यभिचारः आदिमत्त्वं प्राग-भावावच्छिन्नसत्त्वं न चैतदभाव इति वार्थः ॥ १६ ॥

द्वितीये व्यभिचारमुद्धरति । सन्तानस्यानुमानेऽनुमितिकरणे लिङ्गे विशेषणात् सन्तानः सन्तन्यमानः एकधर्म्मावच्छिन्नत्वेन ज्ञायमानः तेन सामान्यवत्त्वे सतीति विशेषणीयमिति ॥ १७ ॥

तृतीये व्यभिचारं वारयति । आकाशे हेतुर्नास्त्येव आकाशे प्रादे-शिकत्वव्यवहारस्तु गौणः प्रदेशशब्देन कारणद्रव्यस्य कारणवतो द्रव्यस्या-भिधानान्न चाकाशं तादृशं तादृशे वा साध्यसत्त्वान्न व्यभिचारः एवं सुखीजात इत्यादौ सुखाद्युत्पत्तिरेव विषय इति भावः ॥ १८ ॥

न चोक्तहेतूनामप्रयोजकत्वं विपक्षबाधकसत्त्वादित्याह । शब्दो यदि नित्यः स्यादुच्चारणात् प्रागप्युपलभ्येत श्रोत्रसन्निकर्षसत्त्वान्नचात्र प्रति-बन्धकमस्तीत्याहावरणेति आवरणादेः प्रतिबन्धकस्यानुपलब्ध्याऽभाव-निर्णयात् देशान्तरगमनन्तु शब्दस्यामूर्त्तत्वान्न सम्भाव्यते अतीन्द्रियानन्त-

प्रतिबन्धकत्वकल्पनामपेक्ष्य शब्दानित्यत्वकल्पनैव लघीयसीति भावः ॥ १८ ॥

भ्रान्तस्य पूर्वपक्षपरं सूत्रद्वयम्। अनुपलम्भादनुपलब्धिसद्भाववन्ना-वरणानुपपत्तिरनुपलम्भात् यथा त्वया आवरणस्यानुपलब्ध्या अभाव इत्युच्यते तथा आवरणानुपलब्धेरनुपलम्भात्तदभाव आवरणोपलब्धिरेव स्यात् यदि वा आवरणानुपलब्धेरनुपलम्भेऽपि नावरणानुपलब्धेरभाव-स्तदा आवरणस्यानुपलम्भादपि नावरणस्यानुपपत्तिरित्यर्थः ॥ २० ॥

सिद्धान्तसूत्रम्। आवरणानुपलब्धेरनुपलम्भादावरणोपलब्धिरिति जात्यु-त्तरम् अहेतुः न मन्मतप्रतिषेधसाधनम् अनुपलब्धेरावरणानुपलब्धेरनुप-लम्भात्मकत्वादुपलम्भाभावात्मकत्वात्तस्य च मनसैव सुग्रहत्वात्तदनुपलब्धिर-सिद्धेति भावः ॥ २२ ॥

सप्रतिपक्षमाशङ्कते। शब्दो नित्यः अस्पर्शत्वाद्गगनवदिति भावः ॥ २३॥

न सप्रतिपक्षस्त्वदीयहेतोरनैकान्तिकत्वादित्याह। अस्पर्शत्वं न शब्दनित्यत्वसाधकं कर्मणि व्यभिचारात् ॥ २४ ॥

अनैकान्तिकमपि साधकं स्यादित्याह। अनैकान्तिकस्य साधकत्वेऽणोः परमाणोर्नित्यत्वं नस्याद्रूपवत्त्वादिना तत्रानित्यत्वानुमानापत्तेरि-त्यर्थः ॥ २५ ॥

शङ्कते। गुरुणा शिष्याय विद्यायाः सम्प्रदानात् तथा च शब्दस्य प्राक्-सत्त्वं सिद्धं तथा च तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यतीति न्यायान्नित्यत्वमर्थसिद्धमिति भावः ॥ २६ ॥

सिद्धान्तसूत्रम्। शिष्ये उपसन्ने गुरुरध्यापयति यदि च शब्दोनित्यः स्यात्तदा शिष्यागमनानन्तरमध्यापनात् पूर्वमपि शब्द उपलभ्येतेत्यनुपल-ब्ध्या च नास्ति शब्द इत्यतस्त्वदुक्तोन हेतुः ॥ २७ ॥

पूर्वपक्षसूत्रम्। मदीयहेतोः प्रतिषेधो न युक्तः कुतः अध्यापनात् यद्यन्तरालकाले शब्दो न स्यात् कथमध्यापनं घटेत अनुपलब्धिस्तु शब्दस्य कण्ठताल्वाद्यभिघातरूपव्यञ्जकाभावादुपपद्यत इति भावः आचार्यास्तु सूत्रद्वयमेवं प्रचक्षते विभक्तिव्यत्यासाद्धेतोस्तदनन्तरालानुपलब्धिरर्थ-स्तथा च हेतोः स्वत्वस्याभावात्तदनन्तरालस्य स्वत्वध्वंसस्यानुपलब्धिरतोन

दानमित्यर्थः प्रतिषेधोन युक्तः न हि दानं ममाभिप्रेतं किन्त्वध्यापनं तच्च विद्यमानस्य शब्दस्यैवेति भावः ॥ २८ ॥

सिद्धान्तसूत्रम्। अन्यतरस्य पक्षस्यानित्यत्वसाधकस्याध्यापनाद्यः प्रतिषेधः स न सम्भवति उभयोः पक्षयोरध्यापनस्य समानत्वादिति शेषः अध्यापनं हि गुरूच्चारणानूच्चारणं शिष्योच्चारणानुकूलोच्चारणं वा तच्च स्थैर्य्यास्थैर्य्यपक्षयोस्तुल्यं न शब्दनित्यतायाः साहायकं विधातुमलं न ह्यध्यापनं दानं येन स्वस्वत्वध्वंसपरस्वत्वापादनार्थं तस्य स्थैर्य्यमाशङ्कनीयं न वा सम्भवति बहूनामेकदा स्वत्वविरोधात्परस्वदानासम्भवाच्च अपि तु त्वत्याध्यापन.दात्विवोपदेशमात्रमिति भावः ॥ २९ ॥

पूर्व्वपक्षसूत्रम्। यच्च स्थिरं तदभ्यस्यमानं दृष्टं यथा दशकृत्वोरूपं पश्यति एवं शतकृत्वोनुवाकमधीत इत्यभ्यासात्स्थैर्य्यं शब्दस्येति भावः ॥ ३० ॥

उत्तरयति। पूर्व्वपक्षोन युक्तः कुतः अन्यत्वे भेदेपि शब्दानां अध्ययनाभ्यासस्य उपचारात्सम्भवात् न ह्यभ्यासः स्थैर्य्यं साधयति द्विर्जुहोति-त्रिर्नृत्यतीत्यादौ भेदेऽप्यभ्यासदर्शनादिति भावः ॥ ३१ ॥

अन्यतैव जगति नास्तीति कथमन्यत्वेऽप्यभ्यासोपपत्तिरिति तटस्थ आशङ्कते। यदन्यस्मादन्यदुच्यते तत्स्वस्मादनन्य दभिन्नं तत्कथमन्यद्भेदाभेदयोर्व्विरोधादिति भावः स्वाभेदस्यावश्यकत्वमिति हृदयम् ॥ ३२ ॥

समाधत्ते। तदभावेऽन्यत्वस्याभावेऽनन्यतापि नास्ति तयोर्भेदाभेदयोः सिद्धेः परस्परसापेक्षत्वात् वस्तुतस्तु तयोर्मध्य इतरस्य एकतरस्य अनन्यत्वस्य इतरापेक्षसिद्धेः इतरत्वस्य भेदस्य नानापेक्षासिद्धिर्यस्य तादृशत्वादित्यर्थः ॥ ३३ ॥

शङ्कते। शब्दोनित्य इत्यादिः अनुपलब्धिरप्रत्यक्षमज्ञानं वा ॥ ३४ ॥

आद्ये प्रतिबन्धिमाह। यद्यप्रत्यक्षत्वादभावसिद्धिस्तदा श्रवणकारणस्याप्रत्यक्षत्व दश्रवणं न स्यादिति सततश्रवणप्रसङ्ग इत्यर्थः ॥ ३५ ॥

द्वितीयेत्वाह। अनुमानादिना उपलभ्यमाने विनाशकारणे अनुपलब्धे रभाव.त्त्वदीयो हेतुरनुपदेश. असाधकः असिद्धत्वात् जन्यभावत्वेन विनाशकल्पनमिति भावः ॥ ३६ ॥

सिद्धान्तिनः सूत्रान्तरम्। शब्दायमाने कांस्यादौ पाणिरूपनिमित्तस्य प्रश्लेषात् संयोगाच्छब्दाभावे उपलभ्यमाने शब्दाभावकारणस्य नानुपलब्धिरिति यथा श्रुतानुयायिनः परेतु पाणिरूपनिमित्तस्य प्रश्लेषः सम्बन्धो यत्र स पाणिजः शब्दः अर्थात् उत्तरशब्दः ततःशब्दाभावे शब्दध्वंसे सति न विनाशकारणानुपलब्धिरित्यर्थ इत्याहुः अन्येतु पूर्वसूत्रे-शब्दस्य तावद्वेगात्मकः संस्कारविशेषो हेतुस्तस्य तीव्रतीव्रतरमन्दमन्दतरत्वाच्छब्दोऽपि तादृशः तत्र चोत्तरोत्तरशब्दानां पूर्वपूर्वशब्दनाशकत्वं कल्प्यत इत्यर्थः ननु तादृशसंस्कार एव नास्तीत्यत्राह पाणीति नानुपलब्धिः संस्कारस्येति शेषः पाणेर्निमित्तस्य प्रश्लेषात् घण्टादिसंयोगात्संस्काररूपकारणाभावद्वारा शब्दाभावे शब्दानुत्पत्तौ नानुपलम्भः संस्कारस्येत्यर्थ इत्याहुः ॥ ३७ ॥

ननु घण्टादिपाणिसंयोगस्य शब्दनिवर्त्तकत्वे घण्टाद्याश्रय एव शब्दः स्यादित्याशङ्कायामाह। उक्तः प्रतिषेधो न सम्भवति अस्पर्शत्वात् शब्दाश्रयस्येति शेषः शब्दो हि न स्पर्शवद्विशेषगुणः अग्निसंयोगासमवायिकारणकत्वाभाववदकारणगुणपूर्वककार्यत्वादित्याशयः ॥ ३८ ॥

एतदेव व्युत्पादयितुमाह। समासे स्पर्शादिसमुदाये साहित्येन शब्दो वर्त्तत इति न युक्तं विभक्त्यन्तरस्य विभागान्तरस्य तारमन्दादेरुपपत्तेः अय मर्थः एकस्मिन्नेव शङ्खादौ तारमन्दादि नानाशब्दा जायन्ते गन्धादयस्तु विनाग्निसंयोगं नपरावर्त्तन्त इति भावः ॥ १०५ ॥ समाप्तं शब्दानित्यत्वप्रकरणम् ॥ ४० ॥

प्रसङ्गाच्छब्दपरिणामवादं दूषयितुं संशयं प्रदर्शयति। इकोयणचीत्यादिना इकारादेर्विकारो यकारादिति केचित् सारं वा व्याचक्षते परेतु इकारे प्रयोक्तव्ये यकारः प्रयोक्तव्य इत्यादेशमादिशन्ति अतश्च वर्णाविकारिणो न वेति संशयः विकारस्य स्वरूपस्य विनाशेऽविनाशे वा द्रव्यान्तरारम्भकत्वं यथा दुग्धादेर्दध्यारम्भकत्वं वीजादेरङ्कुराद्यारम्भकत्वञ्च सुवर्णादेरपि लौहाघातजन्यावयवसंयोगनाशादवयविनो नाशे सत्येव कुण्डलारम्भकत्वं कपालादेश्च स्वरूपाविनाशेन घटाद्यारम्भकत्वम् ॥ ४१ ॥

तत्र विकार निराकरणाय सूत्रम्। न वर्णा विकारिणस्तथा सति

तत्प्रकृतेरुपादानत्वाभिमतस्य विवृद्ध्या विकारस्यापि विवृद्ध्यापत्तेः महदल्पावयवारब्धावयविनो महदल्पत्ववत् ह्रस्वेकारारब्धयकारापेक्षया दीर्घेकारारब्धयकारस्य विवृद्धिः स्यादित्यर्थः तस्मादादेशपक्षः श्रेयानिति भावः ॥ ४२ ॥

आक्षिपति। उक्तो हेतुर्न युक्तः विकाराणां प्रकृत्यपेक्षया न्यूनत्वस्य समत्वस्याधिकस्य चोपपत्तेर्दर्शनात् यथा तूलकपरिमाणापेक्षया तद्विकारस्तन्तुरल्पपरिमाणः यथा वा न्यग्रोधवीजादुत्कृष्टे न नारिकेलीवीजेन न्यग्रोधादल्पो नारिकेलीतरुर्जन्यते कनकादिसमपरिमाणं कटकादि च यथा वा न्यूनाधिकनारिकेलीवीजाभ्यां समौ वृक्षौ न्यूनपरिमाणाच्च वटवीजात् महान् वटतरुरिति ॥ ४३ ॥

समाधत्ते। नोक्तं समाधानं युक्तं अतुल्यप्रकृतीनां भिन्नप्रकृतीनां हि विकाराणां विकल्पः वैलक्षण्यं मयाभिहितं न हि वीजादेर्ह्रास वृद्ध्यादिना वृक्षादेर्ह्रासवृद्ध्यादिकं प्रक्रान्त मदुक्तवैलक्षण्यन्तु तत्राप्यस्ति तथा च त्वदुक्तमुपचारच्छलमिति भावः ॥ ४४ ॥

शङ्कते। द्रव्यत्वेन न्यग्रोधादिप्रकृतीनां तुल्यत्वेऽपि विकारवैषम्यं यथा एवमेव वर्णत्वेन तुल्ययोरपि ह्रस्वदीर्घयोर्यौ विकारौ यकारस्तस्य अविकल्प एकरूप्यं नानुपपन्नमित्यर्थः ॥ ४५ ॥

समाधत्ते। नात्र द्रव्यविकारतुल्यता विकाराणां हि अयं धर्मो प्रकृत्यनुविधानं तद्भेदे भेद इति प्रकृते तदनुपपत्तिः ह्रस्वत्वदीर्घत्वादिना प्रकृतिभेदेऽपि कार्य्यभेदाभावात् ॥ ४६ ॥

इतश्च न विकार इत्याह। विकारप्राप्तस्य न पुनः प्रकृतिरूपता दृष्टा न खलु दधि क्षीरतां पुनरापद्यते इकारस्तु यकारतां प्राप्तः पुनरिकारतामापद्यते दध्यत्रेत्युक्त्वा पुनरपि दधि अत्रेत्युच्यत एवेति भावः ॥ ४७ ॥

आक्षिपति। उक्तो हेतुर्न युक्तः सुवर्णादिकं हि कटकीभावं विहाय कुण्डलतामापन्नं पुनः कटकतामापद्यत एवेति भावः ॥ ४८ ॥

निराकरोति। सुवर्णविकारस्थले हि सुवर्णत्वादिना प्रकृतिता न तु कटकत्वादिना तत्रोभयमपि सुवर्णभावं न जहाति यदि हि सुव-

सुवर्णतामपहाय कटकतामापन्नं पुनः सुवर्णता तदा व्यभिचारः शक्येत न चैवं प्रकृते तु इकारतां हित्वा यकारतां प्राप्तस्यापीकारतापत्तिरस्त्वे-वेति दोषोदुःपरिहर इति भावः ॥ ४९ ॥

अविकारे मूलयुक्तिमाह। वर्णानां नित्यत्वे विकारासम्भवादनि-त्यत्वे चाचिरस्थायित्वेनेकारप्रत्यक्षानन्तरमिकारनाशाद्विकारानुपपत्ति-रित्यर्थः ॥ ५२ ॥

अत्र विकारवादी नित्यत्वमतमालम्ब्य परिहरति। विकाराणां प्रतिषेधो न युक्तः नित्यानां धर्मविकल्पाद्धर्मस्य नानाविधत्वादतीन्द्रिय-त्वात् चकारेणैन्द्रियकत्वं समुच्चीयते यथा हि नित्यानामाकाशादीनामती-न्द्रियत्वेऽपि गोत्वादीनां नित्यत्वमेवमन्येषां नित्यानामविकारित्वेऽपि वर्णानां विकारित्वं स्यादिति ॥ ५३ ॥

अनित्यत्वमालम्ब्य स आह। अनवस्थायित्वेऽपि वर्णानां यथाप्र-त्यक्षं भवत्येवं विकारोऽपि स्यादिति भावः ॥ ५४ ॥

उभयत्रोत्तरयति। उक्तः प्रतिषेधो न युक्तः विकारधर्मित्वे नित्य-त्वासम्भवात् विकारो ह्यत्र स्वरूपपरित्यागेन रूपान्तरापत्तिः तथात्वे च नित्यत्वविरोधात् न हि घटादेः कपालाद्युपादेयत्ववत्प्रकृतेः सम्भवति यकारकाले इकारानुपलब्धेः अनित्यत्वपक्षेऽपि प्रतिषेधो न युक्तः प्रत्यक्षं हि वर्णस्य द्वितीयक्षणे युज्यते विकारस्तु कालान्तरीयो न युज्यते दधीति शब्दानन्तरमत्रेत्यादि शब्देन तस्य नाशादिति भावः ॥ ५५ ॥

इतश्च विकारानुपपत्तिरित्याह। विकाराणां हि प्रकृतिनियमो यथा क्षीरदध्नोः प्रकृति विकारभावो नतु वैपरीत्यं प्रकृते तु दध्यत्रे-त्यादौ विकारो यकारप्रकृतिर्विध्यतीत्यादौ तु यकार इकारप्रकृतिरिति भावः ॥ ५६ ॥

अत्र छलवादी शङ्कते। अनियमो य उक्तः स न युक्तः कुतः अनियत-त्वस्य नियमादित्यर्थः ॥ ५७ ॥

समाधत्ते। अनियमे नियमात् यस्त्वया नियमप्रतिषेधः कृतः स न युक्तः

कुतः नियमानियमयोर्विरोधात् अनियमोऽहि नियमाभावस्तस्मिन्सति नियमासम्भवादिति भावः ॥ ५८ ॥

तदेवं वर्णानां प्रकृतिविकारभावं निरस्य स्वपक्षे विकारव्यवहारमुपपादयति । तु शब्दः पुनरर्थे एतेभ्यः पुनर्वर्णविकारोपपत्तेर्वर्णविकारस्य एकवर्णप्रयोगेण वर्णान्तरप्रयोगस्य उपपत्तेर्वर्णविकार इति व्यवह्रियते तानेवाह गुणान्तरेति गुणान्तरापत्तिर्धर्मिणि सत्येव धर्मान्तरापत्तिः यथोदात्तेऽनुदात्तत्वं उपमर्दोधर्म्मि निवृत्तौ धर्म्यन्तरप्रयोगः यथास्तेर्भूः ह्रासोदीर्घस्य ह्रस्वत्वं वृद्धिःह्रस्वस्य दीर्घत्वं लेशः अल्पत्वं यथाऽस्तेरकारलोपः श्लेष आगमः एतैः कारणैर्विकारव्यवहार इति ॥५६॥

समाप्तं शब्दपरिणामप्रकरणम् ॥ २२ ॥

शाब्दबोधे पदजन्यपदार्थोपस्थितेर्हेतुत्वात्तदुपपादनाय पदार्थे निरूपणीये पदमादौ निरूपयति । ते वर्णा विभक्त्यन्ताः पदं बहुत्वमविवक्षितं विभक्तेश्च स्वत्वमनपेक्षितं विभक्तिश्च सुप्तिङ्रूपा वस्तुतस्तु नेदं पदं शाब्दबोधोपयोगि किन्त्विदमाकाङ्क्षास्वरूपमथ वा विभक्तिर्द्वित्तरन्तः सम्बन्धस्तेन वृत्तिमत्त्वं पदत्वमिति इत्यन्त्र पदं निरूप्य तदर्थनिरूपणं सङ्गच्छते यत्तु प्रसङ्गात् पदार्थनिरूपणमिति तन्न पदनिरूपणस्यासङ्गतत्वापत्तेः एक सूत्रस्य प्रकरणत्वाभावात् ॥ ६० ॥

तत्र पदे निरूपिते तद्वाच्यत्वं पदार्थत्वं निरूपितं तत्रापि धात्वाद्यर्थस्य निर्विवादत्वाद्गवादिपदार्थं निरूपयितुमाह । व्यक्तिर्गवादिः जातिः गोत्वादिराकृतिरवयवसंस्थानविशेषः तेषां सन्निधिः सामीप्यं मिलनं तत्र सति उपचारात् ज्ञानात् तथा च त्रयाणां युगपत्प्रत्ययात्किमेतेषां प्रत्येकं पदार्थ उत समस्तमिति संशयइत्यर्थः इदंभाष्यमिति केचित् वस्तुतस्तु दुःखोधादिस्वरसात् सूत्रमेव तदर्थ इत्यंशस्तु भाष्यकृतः पूरणमिति प्रतिभाति ॥ ६१ ॥

तत्र व्यक्तिशक्तिवादिनो मतमाह । पदार्थ इति शेषः उक्तानां उपचारात् व्यवहारात् अनुबन्धः प्रजननं या गौर्गच्छतीत्यादि व्यवहारोव्यक्तावेव जात्याकृत्योरमूर्त्तत्वात् एवं गवां समूहः गां ददाति गां प्रतिग्र-

ह्वाति दश गावः गौर्वर्द्धते कशा गौः कपिला गौः गोर्भोहितं गौः प्रसूत-इत्यादिव्यवहाराणां व्यक्तावेव सम्भवात् समासः सम्यगासनं सम्बन्धो-ऽनुबन्धइत्यर्थे गौरास्ते गोर्मुखमित्युदाहरणीयम् ॥ ६२ ॥

तद्दूषयति। न व्यक्तौ शक्तिर्व्यक्तिमात्रस्यानवस्थानात् अव्यवस्था-नात् ॥ ६३ ॥

व्यक्तिमात्रस्य शक्यत्वे हि गवादिपदाद्यत्किञ्चिद्व्यक्तेरुपस्थितिः स्यादतो गोत्वविशिष्टाव्यक्तिर्वाच्या तथा च नागृह्णीत विशेषणान्यायात् जातावेव शक्तिरस्तु कथं तर्हि व्यक्तिबोध इत्यग्निमसूत्रम्। अतद्भावेऽपि तत्पदाश-क्यत्वेऽपि तदुपचारः तच्छब्दव्यपदेशो यथा सहचरणादितो ब्राह्मणादौ यष्ट्यादिपदप्रयोगः सह चरणात्संयोगविशेषाद्यष्टिं भोजयेत्यत्र यष्टिधर-ब्राह्मणे यष्टिशब्दप्रयोग एवं स्थानान्मञ्चाः क्रोशन्तीति मञ्चस्थपुरुषे ताद-र्थ्यात् करोतीति कटार्थकवीरणे कटस्यासिद्धत्वेन कारकत्वायोगात् यमस्य वृत्तादनुशासनादितो राजनि यम इति मानात् आढकेन मिताः शक्तव आढकशक्तव इति धारणात्तुलया धृतं चन्दनं तुलाचन्दनमिति सामीप्या-द्गङ्गायां गावश्चरन्तीति कृष्णद्रव्ययोगात् शकटे कृष्णः शकट इत्युदाहर-णीयं ~~मान्यथाम्यादर्श माया इति आधिपत्यात्~~ राजैवास्य कुलमिति कुला-धिपतिः प्रतीयते तथा च यथा गङ्गादिपदाद्गङ्गातीरत्वादिना बोधस्तथा गोपदादितो गोत्वविशिष्टस्य लक्षणया बोध एतेन युगपद्वृत्तिद्वयविरोध एकपदार्थयोः परस्परानन्वयश्च प्रत्युक्तः गोत्वत्वेन रूपेण शक्तिपक्षात्तथै-वोपस्थितिरतोनिष्कारकपदार्थोपस्थितिरपि नास्तीति मन्तव्यम् ॥ ६४ ॥

आकृतिरेव शक्येति मतमुपन्यस्यति। आकृतिः पदार्थः कुतः सत्त्वस्य प्राणिनो गवादेर्व्यवस्थान सिद्धेर्व्यवस्थितत्वसिद्धेस्तदपेक्षत्वादाकृतपेक्षत्वा-दयमश्वो गौरयमित्यादिव्यवहारस्याकृत्यपेक्षत्वादाकृतिरेव शक्येत्यर्थः ॥ ६५ ॥

फलतस्तद्दूषयति। मृद्गवके व्यक्त्याकृतियुक्तेऽपि प्रोक्षणादीनामप्रस-ङ्गादप्रसङ्गनाज्जातिः पदार्थ इतरथा मृद्गवकस्यापि व्यक्तित्वाद्गवाकृति-सत्त्वाच्च वैध प्रोक्षणादिप्रसङ्गादिति भावः ॥ ६६ ॥

केवलव्यक्त्याकृतिशक्तिपक्षं निराकृत्य केवलजातिपक्षं निराक-रोति। न जातिमात्रं पदार्थः जात्यभिव्यक्तेर्जातिशब्दबोधस्य आकृति-

व्यक्त्यपेक्षत्वादाकृतिव्यक्तिविषयकत्वनियमात्तयोरपि वाच्यत्वमावश्यकं शक्तिं विना तज्ज्ञानासम्भवात् न च गोत्वप्रकारकताद्दशाकृतिविशिष्टशाब्दत्वस्य कार्य्यतावच्छेदकत्वात्तज्ज्ञानमिति वाच्यं तथा सति गवादिपदस्य घटत्वादावपि शक्तिप्रसङ्गस्तस्मात्पदं स्ववाच्यमेवोपस्थापयति ॥ ६७ ॥

इत्यञ्च त्रयाणामपि वाच्यत्वं सिद्धमित्याह । तुशब्देनैकैकमात्रपदार्थत्वव्यवच्छेदः पदार्थ इत्येकवचनन्तु तिसृष्वप्येकैव शक्तिरिति सूचनाय विभिन्नशक्तौ कदाचित्कस्य चिदुपस्थितिः स्यात् शक्तेस्तुल्यत्वेऽपि व्यक्तेर्विशेष्यत्वात् प्राधान्यं तथैव शक्तिग्रहात् नचाकृत्यादिसाधारणशक्यतावच्छेदकाभावान्न शक्यैक्यमिति वाच्यं तथा नियमे मानाभावात् इदं गवादिपदमभिप्रेत्य तेन पश्वादिपदस्य जात्यवाचकत्वेपि न क्षतिः जातिपरं वा धर्म्मपरं तथैव लक्षणस्य वक्ष्यमाणत्वात् ॥ ६८ ॥

तत्र के व्यक्त्यादय इत्याकाङ्क्षायामाह । यद्यपि जात्यादेरपि व्यक्तित्वात् प्रमेयत्वमेव व्यक्तित्वं तथापि जात्याकृतिशक्तिविषयव्यक्तेरिदं लक्षणं तथा च गुण विशेषो जात्याकृति समानाधिकरणो गुणः संख्यादिभिन्नस्तदाश्रयः मूर्त्तिर्व्यक्तिरिति समानार्थकमित्यर्थः परे तु गुणा रूपादयः विशेषाविशेषकाः उतक्षेपणादयस्तेषां आश्रयो द्रव्यं तेन जात्याकृत्योर्व्यक्तिरित्याशयः विशेषलक्षणमाह मूर्त्तिरिति मूर्त्तिः संस्थानविशेषस्तद्वानित्याहुः अत्र च मध्यपदलोपी समास इत्याशयः अन्येतु व्यक्तेर्लक्षणं मूर्त्तिरिति सैव केत्याह गुणविशेषाश्रय इति गुणविशेषस्यावच्छिन्नपरिमाणस्याश्रय इत्यर्थं इत्याहुः ॥ ६९ ॥

आकृतिं लक्षयति । जातिलिङ्गमित्याख्या यस्याः जातेर्गोत्वादेर्हि सास्नादि संस्थानविशेषोलिङ्गं तस्य च परम्परया द्रव्यवृत्तित्वं जातिर्द्रव्यासमवायिकारणतावच्छेदिका लिङ्गं धर्मो यस्याःसेत्यर्थ इति कश्चित् ॥ ७० ॥

जातिं लक्षयति । समानः समानाकारकः प्रसवो बुद्धिजननं आत्मा स्वरूपं यस्याः सा तथा च समानाकारबुद्धिजननयोग्यत्वमर्थः समानाकारबुद्धिजननयोग्यधर्मविशेषो नित्यानेकसमवेतरूपार्थं इत्यपि वदन्ति इदन्तु बोध्यं एवं सत्याकृत्यविषयको गवादि पदात् न शाब्दबोधः अनुभवलेन तथैव कार्य्यकारणभावकल्पना इन्धशालाघवा द्गोपदस्य

गौत्वविशिष्टे शक्तिरेव स्यादिति ॥ ७१ ॥ समाप्तं शब्दशक्तिपरीक्षाप्रकरणम् ॥ १३ ॥

द्वितीयाध्यायस्य द्वितीयमाह्निकञ्च ॥ २ ॥

विभागपरीक्षाद्वारकशाब्दप्रमाणपरीक्षणं नाम। इति श्रीविश्वनाथभट्टाचार्यकृता न्यायसूत्रवृत्तौ द्वितीयाध्याय-

वृत्तिः समाप्ता ॥ २ ॥

---

यद्रूपभक्तितुल्यता भवति यत्कृपासन्तरा
यदीयकरुणाकणात्तरति मोहजालं जनः।
विधाय हृदयाम्बुजे रुचिरवाक्प्रचाराय तां
नमामि परदेवतां सततमेव वाणीमहम् ॥

अथावसरतः प्रमेयेषु परीक्षणीयेषु प्रथमोद्दिष्टमात्मादिषट्कं तृतीये परीक्षणीयं तेनात्मादिषट्कं परीक्षैवाध्यायार्थः तत्रात्मादिचतुष्कपरीक्षा प्रथमाह्निकार्थः तत्र च नवप्रकरणानि तत्रादाविन्द्रियभेदप्रकरणं तत्रेन्द्रियं ज्ञानवन्न वेति संशये करणत्वेन सिद्धानामिन्द्रियाणां चैतन्यमस्तु लाघवात्तथा चात्मशब्दस्य नानार्थत्वादिन्द्रियानामभौतिकत्वाद्वा न साङ्कर्य्यमितीन्द्रियचैतन्यवादिनस्तन्निराकरणाय सूत्रम्। एकस्यैव दर्शनस्पर्शनाभ्यामर्थस्य ग्रहणात् दर्शनस्पर्शने ज्ञानविशेषौ तृतीया च प्रकारे तेन चाक्षुषस्पार्शनोभयवत्त्वेनैकस्य धर्मिणः प्रतिसन्धानादित्यर्थः तथा च योऽहं घटमद्राक्षं सोऽहं स्पृशामीत्यनुभवादात्मेन्द्रियव्यतिरिक्त एक इति॥ १॥

अत्र शङ्कते। चक्षुस्त्वगादीनां रूपस्पर्शादिनियतविषयत्वाच्चक्षुरादेश्चाक्षुषादिसमवायित्वमित्यस्याभेदप्रत्ययो भ्रान्त इति भावः ॥ २ ॥

समाधत्ते। उक्तप्रतिषेधो न युक्तः उक्तविषयव्यवस्थानादेवात्मसद्भावादतिरिक्तात्मकल्पनादित्यर्थः अयं भावः तत्तदिन्द्रियाणां तत्तद्विषयक

प्रत्यक्षं प्रति समवायित्वं वाच्यं न तु प्रत्यक्षत्वावच्छिन्नं प्रति अनुमित्यादि जनकत्वे तु विनिगमकाभावः तेन जन्यज्ञानत्वावच्छिन्नजनकतावच्छेदकमात्मत्वं चक्षुरादेरनित्यत्वादात्मनश्च नित्यतायावश्यमापत्त्वाच्चक्षुरादिनाशेऽपि स्मरणाच्चक्षुरहमित्याद्यप्रतीतेश्च नेन्द्रियात्मवादो युज्यत इति ॥३॥

समाप्तमिन्द्रियभेदप्रकरणम् ॥ १४ ॥

ननु गौरोऽहं जानामीत्यादि प्रतीतेरस्तु शरीरमात्मेत्याशङ्क्य दूषयति । पातकाभावात् पातकादेरभावप्रसङ्गात् तथा चोत्तरकालिकं दुःखादिकं न स्यादिति यद्वा दाहोनाशः तथा च शरीरनाशे कृते कर्त्तरि शरीरे विनष्टे पातकं न स्यादित्यर्थः । यद्यपि भूतचैतन्यवादिना पातकादिकं नोपेयते तथापि तस्य प्रसाध्याङ्कत्वादेकदेशिनः पूर्वपक्षित्वाद्वा न दोष इति भावः ॥ ४ ॥

तत्रापि तुल्यदोष इत्याशङ्कते । तदभावः पातकाभावः सात्मकशरीरस्य प्रदाहेऽपि प्रसक्तः तन्नित्यत्वात् तस्य आत्मनो नित्यत्व त् नित्यत्वेन निर्विकारत्वं तेन जन्यधर्म्मानाश्रयत्वमभिमतमिति केचित् तन्नित्यत्वात् शरीरनाशे शरीरविशिष्टात्मनाशस्य नियतत्वादित्यपि कश्चित् किञ्च सात्मकशरीरनाशेऽपि हन्तुः पातकाभावः स्यात् तस्यात्मनो नित्यत्वेन तन्नाशकत्वाभावात् ॥ ५ ॥

परिहरति । कार्य्याश्रयस्य चेष्टाश्रयस्य कर्त्तुः कृत्यवच्छेदकस्य शरीरस्यैव नाशो न त्वात्मन इति न पातकाभावः यद्वा न हन्तुः पातकाभावः कार्य्याश्रयकर्त्तुर्बाधात् शरीरस्य नाशात् ब्राह्मणत्वादेः शरीरवृत्तित्वात्तन्नाशादेव पापोत्पत्तिरिति भावः वस्तुतस्तु पूर्वशरीरावच्छिन्न प्राणविनाशिनो अन्यनसुखनिरोधादेर्हिंसात्वं न स्यात् पातकानभ्युपगन्तृचार्वाकादिमते शरीरभेदसाधनन्तु वक्ष्यमाणयुक्तिभिरिति ध्येयम् ॥ ६ ॥

समाप्तं देहभेदप्रकरणम् ॥ २५ ॥

प्रसङ्गाच्चक्षुरद्वैतप्रकरणमारभते । वामेन चक्षुषा दृष्टस्य दक्षिणेन चक्षुषा प्रत्यभिज्ञानात् स्थिरात्मसिद्धिरिति केषाञ्चिन्मतं तन्निराकरणायैतदुपन्यासः ॥ ७ ॥

एतद्दूषयति । मध्यस्थसेतुना तडागस्येव नासास्थिव्यवहितगोलकान्तरावच्छिन्नतया द्वैतप्रत्ययो भ्रम इत्यर्थः ॥ ८ ॥

आक्षिपति । चक्षुरैक्ये एकचक्षुर्नाशेऽन्धत्वं स्यादिति भावः ॥ ९ ॥

अत्रैकदेशी परिहरति । अवयवस्य शाखादेर्नाशेऽप्यवयविनो वृक्षस्य प्रत्यभिज्ञानान्नावयवनाशे सर्वत्रावयविनाशनियमस्तथा चैकनाशेऽपि नान्धत्वमिति ॥ १० ॥

एकदेशिमतस्य पूर्वोक्ताक्षेपस्य च समाधानाय सिद्धान्तिनः सूत्रम् । उक्तप्रतिषेधो न युक्तः दृष्टान्तस्य विरोधादयुक्तत्वात् न हि शाखाच्छेदे वृक्षस्तिष्ठति तथा सति वृक्षस्यानाशप्रत्यक्षादतोऽवस्थितावयवैस्तत्र खण्डवृक्षोत्पत्तेर्नैकदेशिमतं युक्तम् एतेनैकनाशे द्वितीयाविनाशाद्भेदसाधनमपि प्रत्युक्तं चक्षुर्नाशेऽपि गोलकान्तरावच्छिन्नावयवैः खण्डचक्षुः सम्भवात् इत्यश्च लाघवाच्चक्षुरद्वैतमिति टीकास्वरससिद्धं परे तु चक्षुर्द्वैतमेव सूत्रार्थं मन्यमाना व्याचक्षते सिद्धान्तिनः सूत्रं सव्येति शङ्कते नैकस्मिन्निति समाधत्ते एकेतिशङ्कते अवयवेति निराकरोति दृष्टान्तेति शाखानाशे वृक्षनाशावश्यकत्वात् दृष्टान्तो न युक्तः यद्वा दृष्टान्तस्य गोलकभेदविरोधादन्यथा अनुपपन्नत्वाद्दृष्टं हि मृतस्य चक्षुरधिष्ठानगोलकद्वयं भेदेनैवोपलभ्यत इति वदन्ति ॥ ११ ॥

आत्मन इन्द्रियभेदे युक्त्यन्तरमाह । चिरविल्वाद्यम्लद्रव्ये दृष्टे तद्रसस्मरणाद्दन्तोदकसंप्लवरूपरसनेन्द्रियविकारादिन्द्रियव्यतिरिक्त आत्मा सिद्ध्यति ॥ १२ ॥

आक्षिपति । स्मृतिर्हि स्मर्त्तव्यविषयिणीति नियमस्तस्याश्च दर्शनादिना सामानाधिकरण्ये मानाभावात् अस्तु वा विषयतयैव सामानाधिकरण्यमिति भावः ॥ १३ ॥

समाधत्ते । उक्तप्रतिषेधो न युक्तः धर्मिग्राहकमानेन स्मृतेरात्मगुणत्वात्परिशेषेणात्मगुणत्वसिद्धेरहं स्मरामीत्यनुभवात् विषयनिष्ठ कार्यकारणभावे चैत्रस्य ज्ञानान्मैत्रस्य स्मरणापत्तेरिति भावः ॥ १४ ॥

विषयाणां स्मर्त्तव्यानां स्मृतिसमवायित्वं स्यादित्याशङ्क्य समाधत्ते । अपरिसङ्ख्यानात् आनन्त्यात् तथा च लाघवादतिरिक्तात्मसिद्धिः इदं न

सूत्रं किन्तु भाष्यमिति केचित् ॥ १५ ॥ समाप्तं चक्षुरद्वैतप्रकरणम् ॥ १६ ॥

ननु मनसो नित्यत्वादात्मत्वमस्त्वित्याशङ्कते । नातिरिक्त आत्मा आत्मसाधकमानानां मनसार्थान्तरमिति भावः ॥ १६ ॥

समाधत्ते । यदि मनसो ज्ञातृत्वं तदा व्यासङ्गाद्युपपादनाय करणान्तरमवश्यं वाच्यं तथा चैको ज्ञाता ज्ञानसाधनं चैकं सिद्धं मन आत्मेति संज्ञामात्रं किञ्च व्यासङ्गोपपादकतया मनसोऽणुत्वं सिद्धमात्मनश्च प्रत्यक्षोपपादकतया महत्त्वमिति भेद आवश्यक इति भावः ॥ १७ ॥

ननु रूपादिप्रत्यक्षं सकरणकमस्तु न तु सुखादिप्रत्यक्षं एवं परमाण्वन्तरस्यातीन्द्रियत्वेऽपि मनसः प्रत्यक्षं स्यादत आह । उक्तो नियमविशेषो निरनुमानः निष्प्रमाणकः गौरवाद्वैपरीत्ये च विनागमकाभावाच्चेति भावः ॥ १८ ॥ समाप्तं मनोभेदप्रकरणम् ॥ २७ ॥

एवं साधितेऽपि देहादिभिन्ने आत्मनि विना तन्नित्यतां न परलोकार्थिनः प्रवृत्तिरत आत्मनित्यताप्रतिपादनाय सूत्रम् । जातस्य बालस्य एतज्जन्मानुभूतेष्वपि हर्षादिहेतुषु सत्सु हर्षादीनां सम्प्रतिपत्तिः उत्पत्तिस्तस्याः पूर्वपूर्वानुभवाधीन स्मृतिसम्बन्धादेव सम्भवात् इत्थं चेदानीन्तनस्यात्मनः पूर्वपूर्वसिद्धौ तस्यानादित्वमनादेश्च भावस्य न नाश इति नित्यत्वसिद्धिरिति भावः ॥ १९ ॥

अत्र शङ्कते । बालस्य हर्षादयोमुखविकासाद्यनुमेया न च तत्सम्भवः पद्मादीनां प्रबोधादिवददृष्टविशेषाधीनक्रियावशादेव तदुपपत्तेरिति भावः ॥ २० ॥

सिद्धान्तसूत्रम् । उक्तं न युक्तं यतः पञ्चात्मकानां पाञ्चभौतिकानां पद्मादीनां ये विकारास्तेषां उष्णकालादिनिमित्तत्वात् मनुष्यादीनान्तु हर्षादिनिमित्तकामुखविकासादय इति न तुल्यतेति भावः ॥ २१ ॥

आत्मनित्यत्वे हेत्वन्तरमाह । प्रेत्य मृत्वा जातमात्रस्य यः स्तन्याभिलाषः सतावदाहाराभ्यासजनितः जन्मान्तरीयाहारेष्टसाधनताधीजन्यजीवनादृष्टोद्बोधितसंस्काराधीनेष्टसाधनतास्मरणेन हि बालः स्तन पाने प्रवर्त्तत इत्यनादित्वमिति ॥ २२ ॥

शङ्कते । यथायस्कान्तसन्निहितस्यायसोऽयस्कान्ताभिमुखतयागमनं

तथैव वत्सस्यापि स्तनोपसर्पणं न त्विष्टसाधनताज्ञानाधीनप्रवृत्तिजन्यचेष्टेयमित्यर्थः॥ २३॥

समाधत्ते। स्तनपान एव बालः प्रवर्त्तते नत्वन्यत्रेति नियमः कथं स्यात् वस्तुतस्तु अन्यत्र अयसि प्रवृत्त्यभावात् प्रवृत्तिर्हि चेष्टानुमितालिङ्गं न तु क्रियामात्रमतो न व्यभिचार इति भावः॥२४॥

हेत्वन्तरमाह। वीतरागो रागशून्यस्तावन्नोत्पद्यतेऽपितु सरागस्तत्र च जन्मान्तरीयेष्टसाधनताज्ञानाधीनस्मरणं हेतुरिति पूर्वं स्तन्याभिलाषउक्तः सम्प्रति तु पतगादीनां कणादिभक्षणाभिलाषसाधारणं रागमात्रमित्यपौनरुक्त्यम्॥ २५॥

शङ्कते। द्रव्यस्य घटादेर्यथा सगुणस्य रूपादिविशिष्टस्योत्पत्तिर्यथा घटादिः स्वतएव रूपादिमान् भवति तथैवात्मापि स्वतएव सरागो भवतीत्यप्रयोजकत्वं त्वदीयहेतूनामिति भावः॥ २६॥

समाधत्ते। सङ्कल्पो ज्ञानमिष्टसाधनताज्ञानं इति यावत् तन्निमित्तका हि रागादय स्तथा चेष्टसाधनताज्ञानत्वेनेच्छात्वादिना कार्य्यकारणभावात् प्रवृत्तित्वेन चेष्टात्वेन च कार्य्यकारणभावान्नाप्रयोजकत्वमिति [illegible]

क्रमप्राप्ते शरीरपरीक्षणे मानुषादिशरीरं पाञ्चभौतिक मित्येके तत्र सिद्धान्तसूत्रम्। मानुषादिशरीरं पार्थिवं पृथिवीसमवायिकारणकं गुणान्तरस्य गन्धनीलादिरूपकाठिन्यादेरुपलब्धेरिति॥ २८॥

**पार्थिवाप्यतैजसं तद्गुणोपलब्धेः॥ क॥**

**निश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम्॥ ख॥**

**गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम्॥ग॥**

मतान्तराभिधानाय त्रिसूत्री। तद्गुणानां पृथिव्यप्तेजोगुणानां गन्धस्नेहोष्णस्पर्शानामुपलब्धेः एतावता त्रिभौतिकत्वे सिद्धे निःश्वासादितश्चातुर्भौतिकत्वं निःश्वासोच्छ्वासौ प्राणवायोर्व्यापारविशेषौ क्लेदोजलविशेषो जलविशिष्ट पृथिवीत्युभयथापि जलमावश्यकं पाकस्य तेजः संयोगा-

धीनत्वात्तेजः सिद्धिर्व्यूहो निःश्वासादिः अवकाशदानं छिद्रं एतानि मतानि सूत्रकृता तु च्छलत्वान्न दूषितानि तथाहि एकस्मिन् शरीरे पृथिवीत्वादिनानाजातेः सङ्करापत्तेरसम्भवात् नवा नानोपादानकत्वं विजातीयानामनारम्भकत्वात् तथात्वे वा जलाद्यारब्धस्य न पृथिवीत्वं व्यभिचारात् नवाचित्रद्रव्यं गन्धवत्त्वविरोधात् गन्धादीनामानाशमनपायाच्च पार्थिवत्वमित्युक्तप्रायं यद्वा पार्थिवत्वे कथं जलादिसम्बन्ध इत्याशङ्कायां जलादिनिमित्तवशात् भौतिकत्वादिव्यपदेश इत्याशयेन त्रिसूत्री ॥ क ॥ ॥ ख ॥ ग ॥

पार्थिवत्वे युक्त्यन्तरमाह। सूर्यन्ते चक्षुः स्पृशामीति मन्त्रान्ते पृथिव्यान्ते शरीरमित्यभिधानादेवं प्रकृतौ विकारस्य लयाभिधाने सूर्यन्ते चक्षुर्गच्छतादि मन्त्रान्ते पृथिव्यान्तेशरीरमिति इमां चतुःसूत्रीं केचन भाष्यतया वर्णयन्ति तन्न तथा सत्येकसूत्रस्य प्रकरणत्वानुपपत्तेः अतएव चतुर्थं सूत्रमेवेत्यपरे अन्ये तूक्तयैवानुपपत्त्या आप्यतैजसवायव्यानि लोकान्तरशरीराणि तेष्वपि भूत संयोगः पुरुषार्थतन्त्र इति भाष्यं सूत्रतया वर्णयन्ति तदर्थस्तु आप्यादीनि लोकान्तरेषु वरुण लोकादिषु प्रसिद्धानि [illegible]

पृथिव्युपष्टम्भः पुरुषार्थतन्त्र उपभोगसम्पादकः ॥ २९ ॥

समाप्तं शरीरपरीक्षाप्रकरणम् ॥ २९ ॥

अथेन्द्रियं परीक्षणीयं तत्र लक्षणसूत्रोक्तं भौतिकत्वमिन्द्रियाणां परीक्षितुं संशयमाह कृष्णसारे चक्षुर्गोलके सति घटाद्युपलम्भाद्गोलकस्येन्द्रियत्वमिति बौद्धाः व्यतिरिच्य विषयं प्राप्य उपलम्भात् उपलम्भजननाद्गोलकातिरिक्तानीत्यपरे तत्र इन्द्रियाणि गोलकातिरिक्तानि नवेति संशयो गोलकातिरिक्तानीति नैयायिकादयः तत्राप्यभौतिकान्याहङ्कारिकाणीति सांख्याः भौतिकानीत्यपरे ॥ ३० ॥

तत्र सांख्य मतेन बौद्धमतमुदस्यन्नाह। गोलकं नेन्द्रियं अप्राप्यकारित्वेऽति प्रसङ्गात् इत्यच्च गोलकातिरिक्तं भौतिकमिति वाच्यं तदप्यसङ्गतं चक्षुषा हि न्यूनपरिमाणं महत्परिमाणञ्च गृह्यते नच न्यूनेन महतो व्या-

एवं सम्भवति नवाऽव्यग्रहणमतोऽभौतिकानीन्द्रियाख्याहङ्कारिकाणीति ॥ ३१ ॥

सांख्यं निरस्यति । रश्मिगोलकावच्छिन्नं तेजः तेजोऽर्थस्य घटादेर्यः सन्निकर्षविशेषः संयोगविशेषस्तस्मात् महदण्वोर्ग्रहणमुपपद्यते भौतिकेऽपि प्रदीपादौ महदणुप्रकाशकत्वं दृष्टं अभौतिकत्वे तु पुरः पश्चाद्वर्त्तिनां सर्वेषामेव ग्रहः स्यात् ॥ ३२ ॥

तैजसे चक्षुष्यनुपलब्धिबाधं बौद्धः शङ्कते । रश्म्यर्थसन्निकर्षो न हेतुगोलकातिरिक्तस्य रश्मेरनुपलब्धेः ॥३३॥

समाधत्ते । रूपोपलब्धेः सकरणकत्वादिनानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिर्नाभावनिर्णायिकेत्यर्थः ॥ ३४ ॥

कथं तर्हि नोपलभ्यत इत्यत आह । द्रव्यस्य धर्मभेदो महत्त्वादिर्गुणस्य धर्मभेदः उद्भूतत्वं तदधीनत्वात् प्रत्यक्षस्य द्रव्यमात्रे उपलब्धेर्न नियमः यतोऽनुद्भूतरूप महत्त्वादिकं तस्य प्रत्यक्षं तदभावाच्चक्षुरादेरप्रत्यक्षम् ॥ ३५ ॥

चक्षुरादावनुद्भूतरूपमेव न कुत इत्याशङ्कायां भाष्यम् । अदृष्टविशेषाधीन इन्द्रियाणां व्यूहोरचनाविशेष उपभोग साधनमिति सूत्रमेवेदमिति केचित् ॥ ३७ ॥

महतो रूपवतोऽनुपलब्धौ दृष्टान्तमाह । महतो रूपवतस्योल्काप्रकाशस्य सौरालोकेनाभिभवान्मध्यन्दिनेऽनुपलब्धिवदनुद्भूतरूपवत्त्वाच्चक्षुषोऽप्यनुपलम्भः सम्भवतीति भावः ॥३८॥

नन्वेवं घटादेरपि रश्मिः स्यात्सौरालोकेनाभिभवात्पुनरग्रह इत्यत आह । नेत्यस्य घटादौ रश्मिरिति शेषः ॥ ४० ॥

नन्वनुद्भूतरूपत्वाच्चक्षुषोऽनुपलब्धिर्नत्वभिभवादित्यत्र किं विनिगमकमिति तटस्थाशङ्कायामाह । अनभिव्यक्तितोऽनुद्भूतरूपवत्त्वाच्चक्षुषोऽनुपलब्धिः कुतः बाह्यप्रकाशानुग्रहात् सौरालोकादिसाहित्याद्विषयोपलब्धः तस्योद्भूतरूपत्वे बाह्यप्रकाशापेक्षा न स्यात् अभिभूतत्वे च तत्साहित्येनापि प्रत्यक्षजननं न स्यादभिभूतस्य कार्याक्षमत्वादिति भावः ॥ ४१ ॥

ननु चक्षुषो नाभिभवः किन्तु तद्रूपस्य तस्य च प्रत्यक्षजनकत्वे मानाभावः किञ्चाभिभवात्तस्य न प्रत्यक्षमितरप्रत्यक्षजनने च विरोधाभाव

इत्याशङ्कायामाह। रूपस्य अभिव्यक्तौ प्रत्यक्षे उद्भूतत्व इति यावत् उद्भूतरूपस्य प्रत्यक्षाभावे ह्यभिभवकल्पना नत्वेवं प्रकृते सुवर्णादिवत्सर्वदाभिभावकद्रव्यान्तरकल्पनेच गौरवमिति भावः ॥ ४२ ॥

चक्षुषि प्रमाणान्तरमाह। नक्तञ्चराणां वृषदंशादीनां गोलके रश्मिदर्शनात् तद्दृष्टान्तेन परेषामपि रश्म्यनुमानमिति भावः अन्यथा तमसि तस्य प्रत्यक्षं न स्यादिति हृदयम् ॥४३॥

अप्राप्यकारित्वं चक्षुषः स्यादित्याशङ्कते ॥ ४४ ॥

समाधत्ते। परेतु उक्तसूत्रस्य पूर्वपक्षपरत्वं मन्यमानस्य भाष्यकारस्यावतारणिका अप्राप्यग्रहणमिति वस्तुतः सिद्धान्तसूत्रमेव तत्प्रदीपदृष्टान्तेन काचाद्यन्तरितप्रकाशकत्वेन तैजसत्वं सिध्यतीति नन्वप्राप्यकारित्वं किं न स्यादत्राह कुड्येति उक्तस्य तैजसत्वस्य प्रतिषेधी गोलकात्मकत्वं न सम्भवति कुड्यान्तरितस्यानुपलब्धेरित्याहुः ॥ ४५ ॥

ननु कुड्यान्तरित इव काचान्तरितेऽपि सन्निकर्षो न सम्भवतीति कथं प्राप्यकारित्वमित्याशङ्कायामाह। काचादिना स्वच्छद्रव्येणाप्रतिघाताद्प्रतिबन्धात्सन्निकर्ष उपपद्यत इति भावः ॥ ४६ ॥

तत्र दृष्टान्तमाह। दाह्य इति वस्तुमात्रोपलक्षणं परेतु दाह्ये कपालादौ वह्न्यादेरविघातपरं तदित्याहुः ॥ ४७ ॥

आक्षिपति। अप्रतिघातो न युक्त इतरस्य स्फटिकादेरितरस्य कुड्यादेर्यो धर्मः प्रतिघातकत्वं तत्प्रसङ्गात् स्फटिकादिकमपि कुड्यादिवत्प्रतिबन्धकं भवेदित्यर्थः ॥ ३८ ॥

समाधत्ते। आदर्शे उदके च प्रसादस्वाभाव्यात्स्वच्छस्वभावत्वात् मुखादिरूपोपलब्धिर्न तु भित्त्यादावेवं स्फटिकाद्यन्तरितस्योपलब्धिर्नतु कुड्याद्यन्तरितस्येति स्वाभाव्यान्न दोषः एतेन वह्न्यादेर्घटादिनाऽप्रतिघातवच्चक्षुषोऽपि प्रतिघातो न स्यादिति प्रत्युक्तं वह्न्याद्यप्रतिबन्धेऽपि दीपालोकादेः प्रतिबन्धवत्सम्भवादिति भावः ॥ ४९ ॥

चक्षुषस्तादृशत्वकल्पने किं मानमित्यत्राह। हि यस्मात् दृष्टानामनुमितानां वा पदार्थानां दृष्टेनानुमितानामिति वार्थः तेषामेवं भवितेति

नियोग एवं मा भवितेति प्रतिषेधो वा नोपपद्यते युक्त्यनुसारिणी हि कल्पनेति भावः ॥ ५० ॥ समाप्तमिन्द्रियपरीक्षाप्रकरणम् ॥ ३० ॥

दर्शनस्पर्शनाभ्यामित्यादिकमिन्द्रियनानात्वे युज्यते इत्युपोद्घातेनेन्द्रियनानात्वं परीक्षणीयं तत्र संशयमाह । स्थानान्यत्वे स्थानभेदे घटपटादीनां नानात्वदर्शनान्नानावयवस्थितस्यावयविन एकत्वदर्शनाच्च इन्द्रियाणां नानात्वमेकत्वं वेति संशयः ॥ ५१ ॥

पूर्वपक्षसूत्रम् । सर्वेष्विन्द्रियप्रदेशेष्वव्यतिरेकात् सत्त्वात्त्वगेवैकमिन्द्रियमस्तु ॥ ५२ ॥

उत्तरयति । युगपत् एकदा अर्थानां गन्धरूपादीनाम् अनुपलब्धेर्न त्वगेवैकमिन्द्रियं अन्यथा तस्य व्यापकत्वाच्चाक्षुषादिकाले घ्राणजादिकमपि स्यादिति भावः ॥ ५३ ॥

इन्द्रियाणां नानात्वे कार्य्यभेदमानमाह । इन्द्रियार्थानामिन्द्रियग्राह्याणां रूपादीनां पञ्चत्वात् पञ्चविधत्वात् रूपादीनां हि चक्षुराद्येकैकेन्द्रियमात्रग्राह्यत्वाद्वैलक्षण्यः तच्चैकेन्द्रियपक्षे न सम्भवति अन्धादीनां रूपाद्युपलब्धिप्रसङ्गश्चेति भावः ॥ ५८ ॥

शङ्कते । इन्द्रियार्थानां नीलपीतादीनां बहुत्वादिन्द्रियाणां बहुतरत्वप्रसङ्गादिन्द्रियार्थपञ्चत्वादिन्द्रियभेदो न युक्तः ॥ ५९ ॥

समाधत्ते । उक्तप्रतिषेधो न गन्धादीनां सौरभादीनां गन्धत्वाद्यव्यतिरेकाद्गन्धत्वादिसत्त्वात् तथा च विभाजकगन्धत्वावच्छिन्नग्राहकत्वमभिमतं नत्ववान्तरधर्मावच्छिन्नग्राहकत्वमिति भावः ॥ ६० ॥

यदि गन्धत्वादिना सुरभ्यादीनामैक्यं तदा विषयत्वेन गन्धरसादीनामप्यैक्यादिन्द्रियैक्यं स्यादिति ।

शङ्कते । विषयत्वाव्यतिरेकाद्विषयत्वेनैक्यात् ॥ ६१ ॥

उत्तरयति । इन्द्रियाणामैक्यं न हेतुमाह बुद्धीत्यादि बुद्धेश्चाक्षुषादेर्यल्लक्षणं चाक्षुषत्वादि तत्पञ्चत्वेन तदवच्छिन्नकरणानां पञ्चत्वं एवमधिष्ठानं रूपादिविषयस्तत्पञ्चत्वात् गतिः दूरादौ गमनं इदं चक्षुरधिकृत्य यद्वा गतिः प्रकारस्तथा च प्रकाराणां पञ्चत्वात् चक्षुर्हि गत्वा गृह्णाति त्वग्देहावच्छेदेन श्रोत्रं कर्णावच्छेदेनेत्यादिप्रकारभेदात् आकृति-

गोत्वकानां संस्थानविशेषः जातिः पृथिवीत्वादि वस्तुतोजातिः धर्मस्तेन श्रोत्वत्वसंग्रहः ॥ ६२ ॥

घ्राणादेः पृथिवीत्वादित्वे मानमाह । भूतानां पृथिव्यादीनां ये गुणविशेषा गन्धादयस्तदुपलम्भकत्वात् कुङ्कुमगन्धाभिव्यञ्जकघृतादिदृष्टान्तेन पृथिवीत्वादि साधनमिति भावः ॥ ६३ ॥

समाप्तमिन्द्रियनानात्वप्रकरणम् ॥ ३१ ॥

क्रमप्राप्तार्थपरीक्षणाय सिद्धान्तसूत्रम् । स्पर्शपर्यन्तेषु मध्ये पूर्वं पूर्वं त्यक्त्वा अप्तेजोवायूनां गुणा ज्ञातव्याः उत्तरः शब्द आकाशस्य गुणः तथा च स्पर्शान्ताः पृथिव्या रसरूपस्पर्शा जलस्य रूपस्पर्शौ तेजसः स्पर्शो-वायोः शब्द आकाशस्य ॥ ६४ ॥

आक्षिपति । उक्तो गुणनियमो न युक्तः पृथिव्यादेर्गुणत्वाभिमतानां सर्वेषां घ्राणादिग्राह्यत्वाभावान्न पार्थिवत्वादिकं घ्राणेन पृथिव्या रसा-द्यग्रहणात् वहिरिन्द्रियाणां स्वप्रकृतिवृत्तियोग्याशेषगुणग्राहकत्वनि-यमो भज्येतेति भावः ॥ ६५ ॥

इत्यत्र पृथिव्यादावुपलभ्यमानानां रसादीनां कागतिरित्यत्र स्व-मतमाह । उत्तरोत्तराणाम् अवादीनाम् एकैकस्यैव एकैकक्रमेण तदु-त्तरोत्तरगुणसद्भावात् रसादिगुणसद्भावात् तदनुपलब्धिस्तेषां रसादीनां घ्राणादिनानुपलब्धिरित्यर्थः ॥ ६६ ॥

तर्हि कथं पृथिव्यादौ रसादिग्रहणं तत्राह । अपरं पृथिव्यादि-परेण जलादिना हि यस्मात् विष्टं सम्बद्धं तथा च पृथिव्याद्यवच्छिन्न जलादिना रसनासंयोगाद्रसादिग्रह इति भावः ॥ ६७ ॥ ६८ ॥

सिद्धान्तसूत्रम् । उक्तो गुणनियमो न युक्तः कुतः पार्थिवस्याप्यस्य च द्रव्यस्य प्रत्यक्षत्वाद्रूपस्पर्शसिद्धेस्तस्य रूपस्पर्शशून्यत्वे चक्षुषा त्वचा च ग्रहणं न स्याद्रसादेश्च क्वचित्साक्षात्सम्बन्धेन क्वचिच्च परम्परया हेतुत्वे गौरवमिति भावः ॥ ६९ ॥

रसादेः पृथिव्यादिगुणत्वे घ्राणादिनापि तद्ग्रहणप्रसङ्ग इत्यत्र नियाम-कमाह । पूर्वंपूर्वं घ्राणादितत्तत्प्रधानं गन्धादिप्रधानं प्राधान्ये वीजमाह

गुणोत्कर्षाद्गुणस्य गन्धादेरुत्कर्षात्तद्व्यवस्थापकत्वात् तथा च गन्धादिषु मध्ये सत्त्वव्यवस्थापकगुणस्यैव ग्राहकत्वं घ्राणादीनामिति ॥ ७० ॥

ननु पृथिव्यन्तरस्यापि गन्धप्राधान्यात्किमिन्द्रियं किमनिन्द्रिय-मित्यत्राह । भूयस्त्वात् जलाद्यविशिष्टपृथिव्याद्यारब्धत्वात्तद्व्यवस्थानं घ्राणादीन्द्रियत्वव्यवस्थितिः ॥ ७१ ॥

घ्राणादीनां गन्धादिगुणवत्त्वे मानमाह । सगुणानां गन्धादिविशि-ष्टानां घ्राणादीनामिन्द्रियभावात् गन्धादिसाक्षात्कारकारणत्वात् कुङ्कुम-गन्धाभिव्यञ्जकघृतादौ तथैव दर्शनात् ॥ ७२ ॥

इत्यञ्च गन्धादिसिद्धावप्रत्यक्षत्वादनुद्भूतत्वकल्पनमित्याशयेनाह । तेन इन्द्रियेण तस्य सगुणस्येन्द्रियस्याग्रहणादनुद्भूतत्वकल्पनमिति ॥ ७३ ॥

नन्विन्द्रियगुणानामप्रत्यक्षत्वनियमो नेत्याशङ्कते । उक्तनियमो न युक्तः शब्दस्य श्रोत्रगुणस्योपलब्धेः ॥ ७४ ॥

समाधत्ते । द्रव्यगुणानां रूपशब्दादीनां परस्परं वैधर्म्याच्छब्दस्योप लब्धिर्न चक्षुरूपादीनां शब्दाश्रयस्य लाघवेनैक्यसिद्धेरिति भावः ॥ ७५ ॥

सप्तात्मर्थपरीक्षाप्रकरणम् ॥ ३२ ॥

इति तृतीयाध्यायस्याद्यमाह्निकं आत्मादिप्रमेयचतुष्कपरीक्षणं नाम ।

---

अथ क्रमप्राप्ततया बुद्धेर्मनसश्च परीक्षा सप्तभिः प्रकरणैस्तत्परीक्षैव चा-ह्निकार्थः परेतु शरीरावच्छेदव्याप्यभोगानुकूलसम्बन्धवत्परीक्षा शरीरा-न्तर्वर्त्तिप्रमेय परीक्षेवाह्निकार्थ इति तदसत् इन्द्रियपरीक्षायामतिव्याप्तेः तत्र च बुद्धिपरीक्षा पञ्चभिः प्रकरणैः तत्रादौ बुद्ध्यनित्यताप्रकरणं तत्र संशय दर्शनाय सूत्रम् । कर्माण आकाशस्य च साधर्म्यान्नि स्पर्शत्वाद्बुद्धि-पदार्थे नित्यत्वसंशयः बुद्धिपदं नित्यशक्तं नवेति संशयपर्य्यवसन्नः ॥ १ ॥

तत्र बुद्धिनित्यत्वं सांख्यः साधयति । बुद्धिर्नित्येति शेषः योऽहं घट-मद्राक्षं सोऽहं घटं स्पृशामीति प्रत्यभिज्ञानमेकं वृत्तिमन्तं विषयीकरोति

मचात्मा तथा तस्य जन्यधर्म्मानधिकरणस्य कूटस्थत्वात् तस्मात् वृत्तिमती बुद्धि रेव वृत्तिस्तु तस्याः परिणामः बुद्धेरस्याविर्भावतिरोभावावेव न तूत्पा-दविनाशाविति ॥ २ ॥

परिहरति। साध्यसमत्वात् असिद्धत्वात् प्रतिसन्धातृत्वं न हेतुः अहं जानामीत्यादिना आत्मनएव प्रतिसन्धातृप्रत्ययात् अनादिनिध-नत्वमेव तस्य कौटस्थ्यं अन्यादृशं त्वसिद्धमिति भावः ॥ ३ ॥

बुद्धेरेव स्थायिन्या यथाविषयं ज्ञानात्मिका वृत्तयोवृत्तिमदभिन्ना वह्नेरिव स्फुलिङ्गा निःसरन्तीति सांख्यमतं निरस्यति। वृत्तिवृत्तिमतोर-भेदे वृत्तिनदवस्थित्या वृत्तेरप्यवस्थितिर्व्वाच्या तथा च सर्व्वपदार्थग्रहणं युगपत्स्यात् न चैवं तस्मान्नाभेद इति ॥ ४ ॥

अथ वृत्तीनामनवस्थायित्वमुच्यते तत्राह। अप्रत्यभिज्ञाने प्रत्य-भिज्ञानस्य अभावे विनाशे वृत्तिमतोऽपि विनाशः स्यादतो न द्वयोरै-क्यम् ॥ ५ ॥

अयुगपद्ग्रहणम् स्वमते व्युत्पादयति। मनसइत्यादि मनसोऽणुत्वादि-न्द्रियैः सह क्रमेण सम्बन्धात् ज्ञानानां क्रमिकत्वं तथा च अविभु चैकं मनः पर्य्यायेण पञ्चेन्द्रियैः सम्बध्यत इत्यवतारभाष्यं तत्तदिन्द्रियमनः संयोगे सति ज्ञानमुपपद्यते ॥ ६ ॥

तद्व्यतिरेके ज्ञानाभावमुपपादयति। अप्रत्यभिज्ञानं तत्तदिन्द्रियज-ज्ञानाभावः विषयान्तरेण इन्द्रियान्तरेण मनसः सम्बन्धादित्यर्थः ॥ ७ ॥

त्वन्मते चेदन्नोपपद्यतइत्याह। त्वन्मते मनसः क्रमेणेन्द्रियसम्बन्धो न मनसो विभुत्वेन गत्यभावात् परेतु नकारोन सूत्रान्तर्गतः किन्तुविभुत्वे चान्तःकरणस्य पर्य्यायेणेन्द्रियैः संयोगो नेति भाष्यावतारणिकायां इत्याहुः ॥ ८ ॥

वृत्तिवृत्तिमतोर्वस्तुतोऽभेदेऽपि भेदप्रत्ययप्रतिपादनाय शङ्कते। यथा जवाकुसुमादिसन्निधानादेकस्यापि स्फटिकस्य तत्तद्रूपाभिमान-स्तथावृत्तिमदभिन्नापि वृत्तिस्तत्तद्विषयसन्निकर्षवशान्नानेव प्रतिभासत इति ॥ ९ ॥

दूषयति। अमत्वे साधकाभावान्नोक्तं युक्तमित्यर्थः केचित्तु न हेत्व-

भावादिति भाष्यमिति टीकादर्शनान्नेदं सूत्रं किन्तु तुच्छतया सूत्रकृताऽदूषणानुन्न्यूनतापरिहाराय भाष्यकृता तदुक्तमिति मन्यन्ते ॥ १० ॥

समाप्तं बुद्धिनित्यताप्रकरणम् ॥ २३ ॥

स्फटिके इव नानात्वभ्रम इत्यसहमानः सौगतः शङ्कते। स्फटिकान्यत्वाभिमानवदित्यहेतुः कुतः स्फटिकेऽप्यपरापरोत्पत्तेः विलक्षणविलक्षणस्फटिकोत्पत्तेः तत्र मानमाह व्यक्तीनां भावानां क्षणिकत्वात् तत्साधनाय भाष्यं उपचयापचयप्रबन्धदर्शनाच्छरीरेषु प्रतिक्षणं शरीरेषूपचयापचयदर्शनान्नानात्वं नह्येकस्मिन्नवयविनि परिमाणद्वयसमावेश इति भावः इदं सूत्रमेवेति केचित् ॥ ११ ॥

सिद्धान्तसूत्रम्। पदार्थानां विनाशसामग्रीवैशिष्ट्यनियमे मानाभावात् अभ्युपेत्याह यथा दर्शनमिति यदि कस्यचिद्विनाशसामग्रीवैशिष्ट्ये मानं स्यात्तदा क्षणिकत्वं तस्याभ्यनुज्ञायत एव यथाऽन्त्यशब्द इति ॥ १२ ॥

युक्त्यन्तरमाह। न स्फटिकादेः क्षणिकत्वं यत उत्पत्तिविनाशकारणान्युपलभ्य निर्णीतान्यवयवोपचयापचयादीनि न च स्फटिके विनाशकारणमुपलभ्यते येन पूर्वविनाशोऽपरोत्पत्तिश्च स्यादिति भावः ॥ १३ ॥

आक्षिपति। दध्युत्पत्तिवद्दध्युत्पत्तिकारणानुपलब्धिवत् तदुपपत्तिः पूर्वस्फटिकविनाशकारणानुपलब्धेरुत्तरस्फटिकोत्पत्तिकारणानुपलब्धेश्चोपपत्तिः स्यादिति भावः ॥ १४ ॥

सिद्धान्तसूत्रम्। दध्नः क्षीरविनाशस्य च प्रत्यक्षसिद्धत्वात्तत्कारणं कल्प्यते नत्वेवं स्फटिकविनाशोत्पादावुपलभ्येते येन तत्कारणकल्पनं ॥ १५ ॥

सौगतमते सांख्यदूषणमुपन्यस्यति। न क्षीरस्य नाशो दध्नश्चोत्पत्तिः किन्तु क्षीरस्य परिणामः परिणामशब्दार्थो गुणान्तरप्रादुर्भावः विद्यमानस्य क्षीरस्य पूर्वरसतिरोभावोऽम्लरसात्मकगुणान्तरस्याविर्भावादित्यर्थः ॥ १६ ॥

एतन्निराकरोति सूत्रकारः। व्यूहान्तराद्रचनान्तरात् पूर्वावयवसंयोगनाशो द्रव्यान्तरोत्पादश्चानुभविक इति भावः ॥ १७ ॥

दोषान्तराभिधानाय सिद्धान्तिनः सूत्रम्। क्वचिन्नोपलब्धेरनैकान्तः क्षीरदधिदृष्टान्तेन विनाशोत्पादावकारणकावेवेति न युक्तं घटादौ सका-

रणकत्वोपलब्धेर्व्यभिचारात् वस्तुतः क्षीरविनाशेऽम्लद्रव्यसंयोगस्य हेतुत्वादम्लरसवत् परमाणुभिश्च दध्न आरम्भान्नाकारणकौ क्षीरविनाशदध्युत्पादाविति ॥ १८ ॥ समाप्तं क्षणभङ्गप्रकरणम् ॥ २४ ॥

बुद्धेरात्मगुणत्वं यद्यप्यात्मपरीक्षात एव सिद्धप्रायं तथापि विशिष्य व्युत्पादनाय बुद्ध्यात्मगुणत्वप्रकरणं तत्र चेन्द्रियार्थसन्निकर्षाधीनत्वादिन्द्रियादिनिष्ठत्वमेवास्तु भेर्याकाशसंयोगाधीनशब्दस्याकाशनिष्ठत्ववदिति पूर्वपक्षे सिद्धान्तसूत्रम् । बुद्धिर्नेन्द्रियस्य न वार्थस्य गुणस्तन्नाशेऽपि ज्ञानस्य स्मरणस्यावस्थानात् उत्पत्तेः नह्यनुभवितुरभावे स्मरणमुपपद्यतेऽति प्रसङ्गादिति भावः ॥ १९ ॥

मनोगुणत्वं निरस्यति । युगपज्ज्ञेयानुपलब्धेर्हेतोः सिद्धस्य मनसो न कर्तृत्वं धर्मिग्राहकमानेन करणत्वेनैव सिद्धेः वस्तुतो युगपज्ज्ञेयानुपलब्धेरित्यनेन मनसोऽणुत्वं सूचितं तथा च तद्गतसुखाद्यप्रत्यक्षता स्यात् एवं कायव्यूहे तत्तद्देहावच्छेदेन ज्ञानादिकं न स्यादिति ॥ २० ॥

शङ्कते । तस्या बुद्धेरात्मगुणत्वेऽपि ज्ञानयौगपद्यं तुल्यं आत्मनः सर्वेन्द्रियसंयोगात्तथा च सदोषस्तदवस्थ एवेति कथं तया युक्त्या मनःसिद्धिरिति भावः ॥ २१ ॥

उत्तरयति । युगपज्ज्ञानेन्द्रियैः सह मनसः सन्निकर्षाभावान्न युगपन्नाना विषयोपलब्धिरिति भावः ॥ २२ ॥

आक्षिपति । बुद्ध्युत्पत्तौ कारणस्यानपदेशात् अकथनात् नात्मगुणो बुद्धिः आत्ममनःसंयोगस्य कारणत्वे ज्ञानस्य सार्वदिकत्वप्रसङ्ग इति भावः ॥ २३ ॥

बुद्धेरात्मगुणत्वे दोषमप्याह । बुद्धेरात्मन्यवस्थाने विनाशकारणस्याश्रयनाशादेरनुपलब्धेस्तस्या बुद्धेर्नित्यत्वप्रसङ्गः ॥ २४ ॥

उत्तरयति । बुद्धेरनित्यत्वस्य ग्रहणात् उत्पत्तिविनाशयोरानुभविकत्वात्तत्कारणे कल्पनीये आत्ममनोयोगादेरुत्पादकत्वमनन्तरोत्पन्नबुद्धेः संस्कारादेश्च नाशकत्वं कल्प्यते चरमबुद्धेस्तु अदृष्टनाशात्कालाद्वा नाशः बुद्धेर्बुद्ध्यन्तरनाश्यत्वेऽनुरूपं दृष्टान्तमाह शब्दवदिति शब्दस्य यथा शब्दान्तरान्नाशवदन्त्यशब्दस्य निमित्तनाशनाश्यत्वं तथा प्रकृतेऽपीति भावः ॥ २५ ॥

ननु बुद्धेरात्मगुणत्वे संस्कारात्ममनोयोगयोः सत्त्वात् स्मृतीनां यौगपद्यं स्यादित्येकदेशिनः परिहारमाशङ्कते। ज्ञानं संस्कारकारणं समवेतं यदवच्छेदेन तदवच्छेदेन मनःसन्निकर्षस्य स्मृत्युत्पादकत्वात्तस्य च क्रमिकत्वान्न स्मृतियौगपद्यमित्यर्थः ज्ञायतेऽनेनेति व्युत्पत्त्या ज्ञानपदं संस्कारपरमित्यन्ये ॥ २६ ॥

तन्मतं दूषयति। उक्तं न युक्तं मनसः अन्तःशरीरवृत्तित्वात् अन्तःशरीरे वृत्तिर्ज्ञानजनकीभूतो व्यापारो यस्य तत्त्वात् शरीरातिरिक्तावच्छेदेनात्ममनोयोगस्य ज्ञानाहेतुत्वाच्छरीरावच्छिन्नस्य हेतुत्वे तद्दोषतादवस्थ्यमिति भावः ॥ २७ ॥

एकदेशी शङ्कते। शरीरावच्छिन्नात्ममनोयोगेन हेतुः साध्यत्वात् असिद्धत्वात् मानाभावादिति भावः ॥ २८ ॥

सिद्धान्तसूत्रम्। उक्तप्रतिषेधेन युक्तं स्मरतः शरीरधारणरूपाया उपपत्तेर्युक्तेरन्यथा मनसो वहिर्भावे शरीरावच्छिन्नात्ममनोयोगाभावेन प्रयत्नाभावे शरीरधारणं न स्यादिति भावः ॥ २९ ॥

पुनःशङ्कते। शरीराधारणं न मनसः आशुगतित्वाच्छीघ्रमेव शरीरे परावृत्तेः ॥ ३० ॥

दूषयति। मनसः शीघ्रमागमनं न युक्तं स्मरणे कालनियमाभावात् कदाचिच्छीघ्रं स्मर्यते कदाचित्प्रणिधानाद्विलम्बेनापीति न च प्रणिधानं शरीरान्तःस्थितमनस एव वहिर्निगमस्तु स्मरणाव्यवहितपूर्व्वमेवेति वाच्यं वहिर्निर्गमनान्तःप्रवेशानुकूलक्रियाविभागादिकालकलापं यावच्छरीरधारणं न स्यादिति भावः ॥ ३१ ॥

एकदेशिमतमन्य एकदेशी दूषयति। वहिः प्रदेशविशेषे मनः संयोगविशेषेण सम्भवति स हि न स्मृत्यर्थम् प्रेरणेन तस्य स्मरणीयज्ञानपूर्व्वकतया प्रागेव स्मृत्यापत्तेः नापि यदृच्छया अकस्मात् आकस्मिकत्वस्य निषेधात् नापि मनसो ज्ञतया ज्ञातृतया मनसो ज्ञातृत्वानभ्युपगमात् प्रेरणयदृच्छाज्ञताभिः प्रयत्नेच्छाज्ञानैरित्यर्थ इति कश्चित्तन्न प्रयत्नेनैव चरितार्थत्वादुक्तेः ॥ ३२ ॥

एतन्निराकरोति। नृत्यादिकं पश्यतः कण्टकादिना पादव्यथनेन

तदवच्छेदेन मनःसंयोगो यथा जायते तथैतदपीति भावः इतरथा तत्र मनःसंयोगेऽप्युक्तदोषाः स्युः अदृष्टविशेषाधीनकर्मवशादसाविति चेत्तुल्यं प्रकृतेऽपीति भावः ॥ ३३ ॥

स्मरणायौगपद्यं स्वयमुपपादयति। प्रणिधानं चित्तैकाग्र्यं सुस्मूर्षेति यावत् लिङ्गज्ञानं उद्बोधकं उद्बोधकानामानन्त्यादादिपदं ज्ञानात्यन्ततोयोजनीयं तस्य क्रमात् स्मरणक्रमः यदि च युगपदुद्बोधकानि तदा तावद्विषयकस्मरणमिष्यत एव यथा पदज्ञानादाविति मन्तव्यम् ॥ ३४ ॥

नन्विच्छादीनां मनोधर्मत्वात्तेषां ज्ञानजन्यत्वात् सामानाधिकरण्येन च तत्र कार्यकारणभावात्कथं ज्ञानस्यात्मगुणत्व मित्याशङ्कायां सिद्धान्तसूत्रम्। ज्ञस्य ज्ञानवतआत्मन इच्छादयः हेतुमाह आरम्भनिवृत्त्योरिच्छाद्वेषनिमित्तत्वादिति प्रवृत्तिनिवृत्त्योरिच्छाद्वेषजन्यत्वात्तत्र सामानाधिकरण्येन ज्ञानस्य हेतुत्वमिति भावः यद्वा ज्ञस्य ज्ञानवतो या विच्छाद्वेषौ तन्निमित्तत्वादित्यर्थः तथा च ज्ञानेच्छाप्रयत्नानां सामानाधिकरण्यं नासिद्धम् ॥ ३६ ॥

नन्वस्तु तेषां सामानाधिकरण्यं परन्तु तेषामधिकरणं कायाकारः पार्थिवादिपरमाणुपुञ्ज एवेति चार्वाकः शङ्कते। पार्थिवाद्येषु देहेषु ज्ञानादेर्न प्रतिषेधः कुतः इच्छाद्वेषयोस्तल्लिङ्गत्वादारम्भनिवृत्तिलिङ्गकत्वात्तयोः चेष्टाविशेषलिङ्गकत्वाच्चेष्टायाश्च शरीरे प्रत्यक्षसिद्धत्वादिति भावः ॥ ३७ ॥

समाधत्ते: प्रतिबन्धिमाह। आरम्भनिवृत्त्यनुमापकक्रियाविशेषदर्शनात् परश्वादिषु ज्ञानादिसिद्धिप्रसङ्गः तस्मात्क्रियाविशेषाणां प्रयत्नादिजन्यत्वं सम्बन्धान्तरेण नतु समवायेन व्यभिचारादिति भावः ॥ ३८ ॥

स्वमते व्युत्पादयति। तद्विशेषकौ तयोश्चेतनाचेतनयोर्विशेषकौ इतरव्यावर्त्तकौ नियमानियमौ समवायेन जन्यतानियमतदभावौ समवायेन ज्ञानेच्छादीनां चेतनधर्मत्वादवच्छेदकतया च शरीरे तेषां जन्य जनकभावः परश्वादौ यत्नविषयतया क्रिया वस्तुतस्तु चेष्टैव परश्वादिक्रियाजनिका यत्नादेस्तद्धेतुत्वे मानाभावः ॥ ४० ॥

इच्छादीनां मनोगुणत्वाभावे युक्त्यन्तरमाह। इच्छादय इति शेषः

यथोक्तहेतुत्वात् ज्ञानेच्छादीनां सामानाधिकरण्येन कार्य्यकारणभावात् पारतन्त्र्यात् मनसश्चेतन सहकारित्वादिच्छादयो न तद्गुणाः वस्तुतस्तु इच्छादीनां पारतन्त्र्यात् पराधीनविषयताशालित्वात् इच्छादीनां हि समानाधिकरणस्वजनकज्ञानविषयतैव विषयता ज्ञानवैयधिकरण्ये च तन्न स्यादिति भावः स्वकृतात्स्वयंकृतात्कर्म्मणः अभ्यागमो भोगः स मनसो यत्ना-दिमत्त्वेन स्यान्न ह्यन्यकृतात्कर्म्मणोभोगः नवा भोगोऽपि मनसः भोक्तुर्बन्धमो-क्षादि भागिन एवात्मत्वात्तद्भिन्नः आत्मनि मानाभावात् आत्मनः सुखादि-साक्षात्कारानुरोधान्महत्त्वं मनसश्च धर्म्मिग्राहकमानादणुत्वमतोऽपि नैक्यं न च मनसः परमाणुत्वाल्लाघवाच्च नित्यत्वं तन्मतं तथाचात्ममनसोर्नित्य-त्वात्सदा ज्ञानादिप्रसङ्गादनिर्मोक्षः स्यादतोऽन्तः करणस्यानित्यत्वं तन्नाशश्च मोक्ष इति वाच्यं अदृष्टाद्यभावेन नित्ययोरपि बन्ध्ययोरिव फलाजनकत्वात् न च ज्ञानादिकं प्रकृत्य इत्येतत्सर्वं मनएवेति श्रुतेर्मनसएव ज्ञानादिकं अभेदमुखेनोपादानोपादेयभावकथनादिति वाच्यं अन्नं वै प्राणा इत्यादौ निमित्तेऽपि दर्शनात् कारणत्वमात्रे तात्पर्य्यादिति तत्त्वम् ॥ ४१ ॥

आत्मगुणत्वमुपसंहरति । इच्छादिकमात्मगुण इत्यादिः हेतुमाह परिशेषात् शरीरादिहेतुनिरासात् यथोक्तहेतूनां दर्शनस्पर्शनाभ्यामे-कार्थग्रहणादित्यादीनां उपपत्तेः उपपन्नत्वात् ॥ ४२ ॥

स्मृतेरात्मगुणत्वमर्थसिद्धमपि शिष्यबुद्धिवैशद्याय पृथगुत्पादयति ।

तदप्यर्थे ज्ञस्वाभाव्यात् ज्ञानवत्स्वाभाव्यात् ज्ञानत्वावच्छिन्नवत्त्वं ह्यात्मनः स्वभावः स्मृतेश्च ज्ञानत्वावच्छिन्नत्वात्तद्धर्मत्वमर्थात्सिद्धं यद्वा ज्ञस्वाभाव्यात् स्मृतिहेतुज्ञानस्यात्मवृत्तित्वे सिद्धः स्मृतेरात्मवृत्तित्वमपि सिद्धं परे तु ज्ञानस्याशुविनाशित्वात्कथं स्मृतिहेतुनेत्यत आह स्मरणमित्यादि ज्ञानवतः स्वभावः संस्कारः तस्मादित्यर्थः इत्याहुः ॥ ४३ ॥

स्मृतेर्यौगपद्यसमाधानाय प्रणिधानादीनामुद्बोधकानां क्रमो हेतु-रुक्तस्तत्र प्रणिधानादीनि दर्शयति । स्मरणमित्यनुवर्त्ततेनिमित्तशब्दस्य इन्द्वात्परं श्रुतस्य प्रत्येकमभेदेनान्वयः प्रणिधानं मनसोविषयान्तरसञ्चारवा-रणं निबन्धएकग्रन्थोपनिबन्धनं यथा प्रमाणेन प्रमेयादिस्मरणं अभ्यासः संस्कारबाहुल्यं एतस्य यद्यपि नोद्बोधकत्वं तथापि तादृशे शीघ्रमुद्बोध-

कसमवधानं स्यादित्याशयेन तदुपन्यासः अभ्यासो दृढतरसंस्कार उद्बोधकत्वेनोक्त इति केचित् लिङ्गं व्याप्यं व्यापकस्य स्मारकं लक्षणं यथा कपिध्वजादि अर्जुनादेः सादृश्यं देहादेः परिग्रहः स्वीकारस्तस्य स्वस्वामिभावोऽर्थः तदेकतरेणान्यतरस्मरणं आश्रयाश्रितौ राजादितत्परिजनौ परस्परस्मारकौ सम्बन्धोगुरुशिष्यभावादिः गोवृषन्यायात् पृथगुक्तः आनन्तर्यं प्रोक्षणावघातादेः वियोगो यथा दारादेः एककार्य्यां अन्तेवासिप्रभृतयः परस्परस्मारकाः विरोधादहिनकुलादेरन्यतरेणापरस्मरणं अतिशयः संस्कारउपनयनादिराचार्य्यादिस्मारकः प्राप्तिर्धनादेर्दातारं स्मारयति व्यवधानमावरणं यथा खड्गादेः कोषादि सुखदुःखयोरन्यतरेणापरस्य ताभ्यां तत्प्रयोजकस्य वा स्मरणं इच्छाद्वेषौ यद्विषयकतया गृहीतौ तस्य स्मारकौ भयं मरणादेर्भयहेतोर्व्वा स्मारकं अर्थित्वं दातुः याचकादेः क्रिया वाय्वादेरागात्प्रीतिः पुत्रादेःस्मरणं धर्म्माधर्म्माभ्यां जन्मान्तरानुभूतसुखदुःखसाधनयोः प्रागनुभूतसुखादेश्च स्मरणमिति उक्तेषु च किञ्चित्स्वरूपसत्किञ्चिच्च ज्ञातसदुद्बोधकं शिष्यव्युत्पादनाय चायं प्रपञ्चः ॥ ४४ ॥ समाप्तं बुद्ध्यात्मगुणत्वप्रकरणम् ॥ ३५ ॥

बुद्धेर्बुद्ध्यन्तराद्विनाशउक्तः स च तृतीयक्षणवर्त्तिध्वंसप्रतियोगित्वसिद्धौ स्यादतोबुद्धेरुत्पन्नापवर्गित्वं व्युत्पादनीयं तत्सिद्धान्तसूत्रम् । शरीरादिकर्मधाराया अनवस्थायिन्याः प्रत्यक्षधारापि वाच्या न चाद्यबुद्धेरुत्तरोत्तरग्राहकत्वं चिरस्य व्यापाराभावात् पूर्वपूर्वस्य च परपरतोऽननुभवाद्विनाशसिद्धावाश्रयनाशादेरभावाद्विरोधिगुणस्यैव नाशकत्वमिति कर्मवद्बुद्धे रनवस्थायित्वग्रहणादिति वार्थः ॥ ४५ ॥

शङ्कते । बुद्धिर्यद्याशुविनाशिनी स्याद्योग्य.शेषविशेष धर्मविशिष्ट धर्मिग्राहिणी न स्याद्विद्युत्सम्पातकालीनवस्तुग्रहणवत् न चैवं तस्मान्न तथेत्यर्थः ॥ ४७ ॥

उत्तरयति । प्रतिषेद्धव्यस्य बुद्धेराशुविनाशित्वस्याभ्यनुज्ञा त्वया कृता विद्युत्सम्पातदृष्टान्तरूपस्य हेतोः साधकस्योपादानात् तथा चांशतोबाध इति भावः ॥ ४८ ॥

अस्तु तर्हि तदृष्टान्तेन.न्यासां बुद्धीनामनवस्थायित्वमित्याह । यथा

प्रदीपार्चिषां सन्तन्यमानानामनवस्थायित्वेऽप्यभिव्यक्तग्रहणं तथान्यत्रापि स्यात् विद्युत्सम्पातस्थले या बुद्धिरुत्पन्ना सा स्वविषये व्यक्तैवेति भावः॥ ॥ ४८ ॥ समाप्तं बुद्धेरुत्पन्नापवर्गित्वप्रकरणम् ॥ २६ ॥

अथ बुद्धेः शरीरगुणत्वाभावप्रकरणं न च प्रागेव तत्सिद्धेरनारम्भणीयमेतत् गौरोऽहं जानामीत्याद्यनुभवेन तद्बाधकानामाभासीकरणादतोविशिष्य तद्व्युत्पादनाय संशयबीजमाह। द्रव्ये चन्दनादौ स्वगुणस्य रूपादेः परगुणस्य शैत्यादेश्च ग्रहादेवं शरीरे रूपादेरौष्ण्यस्य च ग्रहाद्बुद्ध्यादिः शरीरगुणो न वेति संशयः॥ ५० ॥

तत्र सिद्धान्तसूत्रम्। न शरीरगुणश्चेतनेति आदौ भाष्यकृतः पूरणं न शरीरविशेषगुणइत्यर्थः अयं तर्काकारः बुद्ध्यादिकं शरीरविशेषगुणः स्याद्यावच्छरीरभावि स्यात् रूपादिवत् तत्परिष्कार्य्यं चानुमानं बुद्ध्यादिकं न शरीरविशेषगुणः अयावद्द्रव्यभावित्वात् शब्दवत् व्यतिरेके रूपवद्वा अयावद्द्रव्यभावित्वञ्च आश्रयत्वाभिमतकालीननाशप्रतियोगित्वम्॥ ५१ ॥

पिठरपाकमते व्यभिचारमाशङ्कते। शरीरे पाकाधीनरूपादिना व्यभिचारान्नोक्तं साधनं युक्त मित्यर्थः परे तु सिद्धान्तसूत्रमेवेदं तथा हि पाकजरूपेण व्यभिचारः शङ्कनीयः पाकजगुणान्तरस्य रूपान्तरस्योत्पत्तेः तथा च स्वसमानाधिकरणस्वसमानजातीयासमानकालीनत्वं पूर्व्वोक्तहेतौ नाशप्रतियोगित्वे विशेषणीयमित्यर्थ इत्याहुः॥ ५२ ॥

सिद्धान्तसूत्रम् पाकजानां प्रतिद्वन्द्विनि पूर्वशरीरप्रतिरूपके शरीरान्तरे सिद्धेः घटादौ पाकजरूपसम्भवेऽपि शरीरे न तत्सम्भवः शरीरावयवानाञ्चर्म्मादीनामग्निसंयोगविशेषेण नाशावश्यकत्वात् परेतु पाकजानां प्रतिद्वन्द्विनोऽग्निसंयोगात्सिद्धेः तथा च तादृशाग्निसंयोगासमानाधिकरणत्वमर्थस्तेनाग्निसंयोग नाश्येऽग्निसंयोगजन्ये च न व्यभिचार इत्याहुः अन्ये तु शरीरगुणत्वाभावे हेत्वन्तरमाह प्रतिद्वन्द्वीति पाकजानां पूर्वरूपादिकं प्रतिद्वन्द्वि विरोधि एकस्मिन् रूपे विद्यमाने रूपान्तराभावात् प्रकृते त्वेकस्मिन् ज्ञाने सत्यपि द्वितीयक्षणे ज्ञानान्तरोत्पत्तेर्ज्ञानादिकं न शरीरविशेषगुण इत्यर्थ इत्याहुः॥ ५३ ॥

हेत्वन्तरमाह। शरीरविशेषगुणानामिति शेषः ज्ञानसुखादिकन्तु

न शरीरव्यापकं हृदयाद्यवच्छेदेन तदानुभविकत्वादिति भावः ॥ ५४ ॥

देशयति । शरीररूपादेराश्रयव्यापकत्वं न शारीरस्य गौररूपस्पर्शादेः केशनखादावनुपलब्धेरित्यर्थः ॥ ५५ ॥

दूषयति । स्पष्टं अन्ये तु चेतना न शरीरगुणः शरीरव्यापित्वात् शरीरे तदवयवेषु सर्वेष्वेकेन सम्बन्धेन रूपवत् शरीरगुणस्तु न स्वावयववृत्तिः शङ्कते न केशेति चैतन्यस्यानुपलम्भः समाधत्ते त्वगितीत्याहुः ॥ ५६ ॥

हेत्वन्तरमाह । बुद्धिर्न शरीरगुणः शरीरगुणवैधर्म्यात् वहिरिन्द्रियावेद्यत्वे सति वेद्यत्वात् ॥ ५७ ॥

आक्षिपति । नोक्तं युक्तं रूपादीनां परस्परवैधर्म्यात् तथाच तद्रीत्या स्पर्शादीनां शरीरगुणत्वं न स्यादचाक्षुषत्वात्तथाचोक्तमप्रयोजकमिति भावः ॥ ५८ ॥

समाधत्ते । रूपादीनां न शरीरगुणत्वप्रतिषेधः कुतः ऐन्द्रियकत्वात् तत्तदिन्द्रियाग्राह्यत्वलक्षणतत्तद्गुणवैधर्म्येऽपि शरीरगुणत्वाविरुद्धवैधर्म्यस्य वहिरिन्द्रियाग्राह्यत्वे सति ग्राह्यत्वस्याभावात् बुद्धौ च तत्सत्त्वादिति भावः ॥ ५९ ॥ समाप्तं बुद्धेशरीर-गणभेद प्रकरणम् ॥ ३७ ॥

अथ क्रमप्राप्ता मनःपरीक्षा तत्र प्रतिशरीरमेकं मनश्चक्षुरादिसहकारितया मनःपञ्चकं वेति संशये मनःपञ्चकमेवोचितं तेन च प्रत्येकं सकलमनःसम्बन्धाद्व्यासङ्गयौगपद्ये उपपद्येते इति पूर्व्वपक्षे सिद्धान्तसूत्रम् । प्रतिशरीरं मनो नानात्वे व्यासङ्गस्थलेऽपि यौगपद्यं स्यादतो न मनो नानात्वमिति भावः ॥ ६० ॥

दीर्घशष्कुलीभक्षणादौ ज्ञानयौगपद्यान्नानात्वं स्यादित्याशङ्कते । न एकं मनः अनेकक्रियाणां अनेकज्ञानानामुपलब्धेरित्यर्थः ॥ ६१ ॥

समाधत्ते । क्रमिकेऽपि तदुपलब्धिर्यौगपद्योपलब्धिराशुसञ्चारात् शीघ्रसञ्चारात्मकदोषात् यथा अलातचक्रे वेगातिशयेन भ्राम्यमाणे क्रियासन्तानस्य भेदेनानुपलब्धिरिति ॥ ६२ ॥

ननु यौगपद्योपपादकतया मनसो वैभवं स्यादत्राह । मन इति

शेषः यथोक्तस्य ज्ञानायौगपद्यस्य हेतुत्वान्मनोऽणुत्वसाधकत्वादित्यर्थः ॥ ॥ ६३ ॥ समाप्तं मनःपरीक्षाप्रकरणम् ॥ २८ ॥

अथ प्रसङ्गाच्छरीरस्य तत्तत्पुरुषादृष्टनिष्पाद्यताप्रकरणम् अथवा एकत्रैव शरीरे मनसः सर्वैरात्मभिः सह संयोगात् सर्वत्रैव मनसा ज्ञानं जन्यतामतस्तददृष्टजन्यताप्रतिपादनप्रकरणं तत्र शरीरं तत्तत्पुरुषसम-वेतादृष्टनिमित्तकं नवेति विप्रतिपत्तौ निषेधकोटिस्त्रेधा अदृष्टाभावात् तस्य शरीरहेतुत्वाभावात् अदृष्टस्य पुरुषसमवायाभावाद्वा तत्राद्यं पक्षं निरस्यति । पूर्वकृतस्य यागदानहिंसादेः फलस्य धर्म्माधर्म्मरूपस्य अनु-बन्धात् सहकारिभावात्तस्य शरीरस्योत्पत्तिः ॥ ६४ ॥

आक्षिपति । भूतेभ्य इति सावधारणं तथाचादृष्टनिरपेक्षेभ्यो भूतेभ्यः परमाणुभ्यो मूर्त्तेर्मृदादेरुपादानमारम्भो यथा तथैव तस्य शरीरस्य उपा-दानमारम्भः परमाणुभ्यो ऽदृष्टनिरपेक्षेभ्य इत्यर्थः ॥ ६५ ॥

समाधत्ते । नोक्तं युक्तं दृष्टान्तस्य साध्यसमत्वात् पक्षसमत्वात् मृदा-देरप्यदृष्टसापेक्षपरमाणुभ्य एवोत्पत्तेरुपगमात्तदजन्यत्वस्य तत्रासिद्धेरिति भावः ॥ ६६ ॥

न मृदादिसाम्यमित्याह सूत्राभ्याम् । शरीरे न मृदादिसाम्यं मातापित्रोः कर्मणः शरीरोत्पत्तिनिमित्तत्वात् पुत्रदर्शनादिजन्यसुखा-नुभावकादृष्टस्य देवाराधनादिजन्यस्य पुत्रादिनिमित्तत्वात् एव माता-पित्रोराहारस्य शरीरोत्पत्तिनिमित्तत्वाददृष्टसहकारेणाहारस्य शुक्र-शोणितादिद्वारा कललादिजनकत्वात् आहारस्य पितामहपिण्डभोज-नादेरदृष्टद्वारा पुत्रजनकत्वादित्यर्थ इत्यन्ये ॥ ६७ ॥ ६८ ॥

आहारस्यादृष्टसहकारित्वे विपक्षे बाधकमाह । प्राप्तौ दम्पत्योः सम्प्रयोगे तु गर्भधारणस्य यतो न नियमस्ततोऽदृष्टस्य सहकारित्वमावश्य-कमिति भावः ॥ ६९ ॥

नन्वदृष्टनिरपेक्षैरेव भूतैः कैश्चित् स्वभावविशेषाच्छरीरं जन्यतां स्वभावानभ्युपगमे च शरीरस्य सर्व्वात्मसंयुक्तत्वात् साधारण्यापत्तिरत आह । अयमर्थः शरीरस्य सर्व्वात्मसंयुक्तत्वेऽपि संयोगविशेषोऽवच्छेदक-तालक्षणो येनात्मना सह तदीयं तच्छरीरं संयोगविशेष एव कुत इत्यत आह

संयोगेति संयोगविशेषेत्पत्तौ कर्म अदृष्टविशेषो निमित्तं यथा शरीरोत्पत्तावदृष्टविशेषो निमित्तमिति संयोगे विशेषस्तदात्मज्ञानजननियामको जातिविशेष एव संयोगः शरीरावयवसंस्थानविशेष इति कश्चित् ॥ ७० ॥

अथ शरीरं नादृष्टजन्यं प्रकृतेरारम्भस्वभावत्वादेव तदुपपत्तेः प्रतिबन्धकपूर्वशरीरापगमस्त्वदृष्टाधीनः जलस्य निम्नानुसरणस्वभावस्येव बन्धापगमाधीनत्वम् इति द्वितीयपक्षं सांख्यसम्मतं निरस्यति । एतेन अदृष्टहेतुकत्वव्यवस्थापनेन अनियमस्तु आत्मनः कदाचिन्मानुषशरीरसम्बन्धः कदाचिदन्यादृशः किञ्चिच्च शरीरं सकलावयवं किञ्चिच्च विकलावयवमित्यादि अदृष्टहेतुत्वानभ्युपगमे त्वयमनियमो न त्वज्ञ्नाते किन्त्वादृष्टनिरपेक्षप्रकृतिमात्रारब्धत्वे सर्वात्मसाधारण्यं शरीरस्य स्यात् इति भावः अन्ये तु अदृष्टमप्यनियतं स्यादित्यत आह एतेनेति तत्राप्यदृष्टान्तरमित्यनादित्वमेवेति भाव इत्याहुः ॥ ७१ ॥

आर्हतास्तु मनःपरमाणुगुणमदृष्टं मन्यन्ते तथाहि पार्थिवाः परमाणवः सहिताः स्वादृष्टवशाच्छरीरमारभन्ते मनश्च स्वादृष्टप्रयुक्तं शरीरमाविशति तच्चादृष्टं स्वभावादेव पुद्गलस्य सुखदुःखे साधयतीति तन्मतमाह । तत्तदात्मादृष्टोपग्रहं विनैव तत्तदात्मोपभोगाय परमाणवश्शरीरमारभन्ते मुक्तेऽपि तदात्मनि तद्भोगाय शरीरमारभेरन् अपवर्ग इत्युपलक्षणं संसारिणामपि नरकरितुरगादिशरीरोपग्रहे विनिगमकं न स्यादिति भावः ॥ ७२ ॥

अदृष्टस्य मनोगुणत्वमपि दूषयति । संयोगस्य शरीरारम्भकस्य ज्ञानादिजनकस्य च उच्छेदो न स्यात् कुतः मनसो यत्कर्म अदृष्टं तन्निमित्तत्वात् तस्य नित्यत्वात्तादृशसंयोगधारा नोच्छिद्येत तस्यानित्यत्वेऽपि व्यधिकरणभोगस्य तन्नाशकत्वेऽति प्रसङ्ग इति भावः ॥ ७५ ॥

संयोगानुच्छेदे का क्षतिरत आह । तथा सति प्रापणस्य मरणस्यानुपपत्तेः शरीरादेर्नित्यत्वस्याविनाशित्वस्य प्रसङ्गः ॥ ७६ ॥

आक्षिपति । यथा परमाणोः श्यामता नित्यापि निवर्त्तते तथा शरीरादिकमपि निवर्त्तते यद्वा तथैव परमाणुनिष्ठं नित्यमप्यदृष्टं निवर्त्तते तदभावाच्च नापवर्गे शरीरमिति ॥ ७७ ॥

सिद्धान्तसूत्रम्। अकृतस्य प्रमाणाविषयस्य अभ्यागमः स्वीकारस्तत्प्रसङ्गादित्यर्थः न हि परमाणुनिष्ठादृष्टस्य कारणस्य सत्त्वे शरीरोच्छेदः स्यादेवमणुश्यामता नित्यत्वस्यापि प्रमाणागोचरस्य स्वीकारः स्यात्तथा च दृष्टान्तासिद्धिः न वाऽनादेर्भावस्य नाशः सम्भवति जन्यभावत्वेन तद्धेतुत्वात् यद्वा नित्यादृष्टाच्छरीरसम्बन्धोपगमे अकृतात् स्वयमजनितात्कर्मणोऽभ्यागमः फलसम्बन्धः स्यात्तथा च स्वाकृतत्वाविशेषात् किं शरीरं कस्य भविष्यतीत्यत्र नियामकाभाव इति भावः॥ ७८ ॥

समाप्तं शरीरस्यादृष्टनिष्पाद्यताप्रकरणम्॥ ३६ ॥

समाप्तञ्च तृतीयाध्यायस्य द्वितीयमाह्निकम्॥ २ ॥

इति श्रीविश्वनाथभट्टाचार्य्यकृतायां न्यायसूत्रवृत्तौ तृतीयाध्यायवृत्तिः समाप्ता॥ ३ ॥

---

सूरकोटिविजयिप्रभाभरं योगिमानसचरं परं महः।
श्यामलं किमपि धाम कामदं कामकोटिकमनीयमाश्रये॥

तृतीये तावदात्मादिप्रमेयषट्कं कारणरूपं परीक्षितमथ कार्य्यरूपप्रवृत्त्यादिप्रमेयषट्कमवसरतो हेतुमद्भावेन च परीक्षणीयं यद्यपि प्रथमाह्निके षट्कं परीक्षणीयं द्वितीयाह्निके तु तत्त्वज्ञानं तथापि तस्यापवर्गहेतुत्वादुपोद्घातेन च परीक्षणीयत्वादपवर्गपरीक्षान्तःपातितया षट्कपरीक्षैवाध्यायार्थः तत्र चोद्दिष्टधर्मवत्तया षट्कपरीक्षा प्रथमाह्निकार्थः तत्र प्रथमाह्निके चतुर्दशप्रकरणानि तत्र चोक्तरूपवत्तयाप्रवृत्तिदोषयोः परीक्षा प्रथमप्रकरणार्थः न चार्थभेदात् प्रकरणभेदः यथा तथेति परस्परसाकाङ्क्षाभ्यामवयवाभ्यामुक्तरूपवत्त्वलक्षणैकार्थवत्त्वकथनात् प्रवृत्तिपरीक्षायामाकाङ्क्षितायां सूत्रम्। अत्र तथैवेति शेषं पूरयन्ति तदयुक्तं तथा सत्यत्रैव यथा शब्दस्याकाङ्क्षाशान्तावग्रिमसूत्रस्य तथाशब्देऽपि यथाशब्दान्तरस्य पूरणीयतया प्रकरणभेदापत्तेस्तस्मादग्रिमसूत्रस्य तथाशब्दे-

नान्वयो युक्तः प्रवृत्तिर्यथा उक्तलक्षणवती तथा दोषा अप्युक्तलक्षणवन्त इत्यपिमसूत्रसम्बलितोऽर्थः प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इत्युक्तलक्षणस्याविसिद्धं लक्षणमिति भावः प्रवृत्तिस्तु द्वयी कारणरूपा कार्य्यरूपा च द्वे अप्यात्मसमवेते तत्राद्या जन्यत्वेनाविशिष्टा विशिष्टा वा यत्नत्वजातिमतो प्रत्यक्षसिद्धा द्वितीया तु धर्माधर्मरूपा यागादेरगम्यागमनादेश्च चिरध्वस्तस्य व्यापारतया कर्मनाशाजलस्पर्शादेः प्रायश्चित्तादेश्च नाश्यतया सिध्यतीति ॥ १ ॥

दोषपरीक्षायां प्राप्तायामाह। तथा दोषा अपि प्रवर्त्तना लक्षणा इत्युक्तलक्षणवन्त एवेति नासिद्धिरिति भावः ॥ २ ॥

समाप्तं प्रवृत्तिदोषसामान्यपरीक्षाप्रकरणम् ॥ ४० ॥

अथ त्रैराश्येन विशेषेण दोषपरीक्षणाय तत्त्रैराश्यप्रकरणं तत्र सिद्धान्तसूत्रम्। तेषां दोषाणां त्रयो राशयः त्रयः पक्षा न तु रागद्वेषमोहानामेकैकत्वं तेषामर्थान्तरभावात् अवान्तरभेदवत्त्वात् तथा च भयशोकमानादीनामेष्वेवान्तर्भावान्न विभागन्यूनत्वं इच्छात्वद्वेषत्वमिथ्याज्ञानत्वरूपविरुद्धधर्मवत्त्वान्न विभागाधिक्यम् इच्छात्वादिकन्तु रागादावनुभवसिद्धं तत्र रागपक्षः कामो मत्सरः स्पृहा तृष्णा लोभो माया दम्भ इति कामो रिरंसा रतिश्च विजातीयः संयोगः नारीगताभिलाष इति तु न युक्तं स्त्रियाः कामेऽव्याप्तेः मत्सरः स्वप्रयोजनप्रतिसन्धानं विना पराभिमतनिवारणेच्छा यथा राजकीयादुदपानान्नोदकं पेयं इत्यादि एवं परगुणनिवारणेच्छाऽपि स्पृहा धर्माविरोधेन प्राप्तीच्छा तृष्णा इदं मे न क्षीयतामितीच्छा उचितव्ययाकरणेनापि धनरक्षणेच्छारूपं कार्पण्यमपि तृष्णाभेद एव धर्मविरोधेन परद्रव्येच्छा लोभः परवञ्चनेच्छा माया कपटेन धार्मिकत्वादिना स्वोत्कर्षख्यापनेच्छा दम्भः। द्वेषपक्षः क्रोध ईर्ष्याऽसूया द्रोहोऽमर्षोऽभिमान इति क्रोधो नेत्रलौहित्यादिहेतुर्दोषविशेषः ईर्ष्या साधारणे वस्तुनि परस्वत्वात्तद्ग्रहीतरि द्वेषः यथा दुरन्तदायादानाम् असूया परगुणादौ द्वेषः द्रोहो नाशाय द्वेषः हिंसा तु द्रोहजन्या परे तु तान्द्रोहं मन्यते अमर्षः कृतापराधे असमर्थस्य द्वेषः अभिमानोऽपकारिण्यकिञ्चित्करस्यात्मनि द्वेषः। मोहपक्षः विपर्ययसंशयतर्कमानप्रमादभय-

शोकाः विपर्य्ययो मिथ्याज्ञानापरपर्य्यायोऽयथार्थनिश्चयः एकधर्मिकविरुद्ध-भावाभावज्ञानं संशयः स एव विचिकित्सेत्युच्यते व्याप्यारोपाद्व्यापकप्रस-ञ्जनं तर्कः आत्मन्यविद्यमानगुणारोपेणोत्कर्षधीर्मानः गुणवति निर्गुणत्व-धीरूपस्मयोऽपि मानेऽन्तर्भवति प्रमादः पूर्वकर्त्तव्यतया निश्चितेऽप्यकर्त्त-व्यताधीः एवं वैपरीत्येऽपि भयमनिष्टहेतूपनिपाते तत्परित्यागानर्हता ज्ञानं शोक इष्टवियोगे तल्लाभानर्हताज्ञानम् ॥ ३ ॥

शङ्कते। रागादीनां भेदो न एकप्रत्यनीकभावात् एकस्मिन् प्रत्य-नीकभावो विरोधित्वं यस्य तत्तथा तेनैकनाश्यत्वादित्यर्थः एकं हि तत्त्व-ज्ञानमेषां विरोधि ॥ ४ ॥

समाधत्ते । एकविरोधित्वं भेदनिषेधेन हेतुर्व्यभिचारात् एकाग्नि-संयोगनाश्यत्वेऽपि रूपादीनां भेदात् ॥ ५ ॥

किञ्च नैतेषामेकनिवर्त्त्यत्वं तत्त्वज्ञानस्य मोहनिवर्त्तकत्वात्तन्निवृत्त्या रागादिनिवृत्तेरित्याशयेनाह । यद्यपि बहूनां निर्द्धारणे दृष्ठनः तमयोर्वा विधानात् पापतमः पापिष्ठ इति वा युक्तं तथापि द्वौ द्वावधिकृत्य निर्धा-रणं द्वयोर्निर्धारणे ईयसुनो विधानात्तेन रागमोहयोर्द्वेषमोहयोर्वा मोहः पापीयाननर्थमूलं बलवद्द्वेष्य इति यावत् हेतुमाह नामूढस्य मोहशून्यस्य रागद्वेषयोरभावादित्यर्थः न च तत्त्वज्ञानिनोऽपि हिताहितगोचरप्र-वृत्तिनिवृत्ती रागद्वेषाधीने इति तत्र व्यभिचार इति वाच्यं धर्माधर्मप्रयो-जकरागद्वेषयोर्दोषत्वेन विवक्षितत्वात् एतदभिप्रायकमेवासक्तो हि षंश्च मुक्त इत्यादिकमपीति भावः ॥ ६ ॥

शङ्कते। दोषनिमित्तत्वान्मोहस्य दोषभिन्नत्वं स्यादभेदेन कार्य्य-कारणभावाभावात् दोषेभ्य इत्यान्तर्गणिकभेद इष्टवचनं प्राप्तस्तर्हीत्यशस्तु न सूत्रं किन्तु भाष्यकृतः पूरणमित्यपि वदन्ति ॥ ७ ॥

निराकरोति । मोहस्य दोषलक्षणसत्त्वाद्दोषत्वं व्यक्तिभेदाच्च हेतु-हेतुमद्भावो न विरुध्यत इति भावः ॥ ८ ॥

अप्रयोजकमुक्त्वाऽनैकान्तिकत्वमप्याह । एकजातीययोरपि द्रव्ययो-र्गुणयोश्च निमित्तनैमित्तिकोपपत्तेर्हेतुहेतुमद्भावस्वीकारात्तुल्यजातीयत्व-प्रतिषेधो न युक्त इति ॥ ९ ॥ समाप्तं दोषपरीक्षाप्रकरणम् ॥ ४१ ॥

क्रमप्राप्ततया प्रेत्यभावे परीक्षणीये प्रेत्यभावः शरीरस्य बुद्धेरात्मनो वेति संशये पुनरुत्पत्तिः प्रेत्यभाव इति लक्षणसूत्राद्विनष्टस्योत्पादः प्रतीयते न चासौ नित्यस्यात्मनः सम्भवतीति शरीरादेः स्यात् न च कृतस्य शरीरादेरुत्पत्तिविरोधाच्चेदं युक्तमिति वाच्यं प्रेत्यभाव इत्यस्य मुखं व्यादाय स्वपितीतिवत् व्यत्ययेन भूत्वा प्रापणमित्यर्थादत्र सिद्धान्तसूत्रम् । आत्मनः पूर्वोक्तयुक्त्या नित्यत्वे प्रेत्यभावस्तस्य सिध्यति एकजातीयशरीराद्यसम्बन्धचरमसम्बन्धनाशयोरुत्पादप्रापणयोरात्मनः सम्भवात् सम्बन्धस्वरूपोच्छेद्यानुच्छेदकभावलक्षणः स च स्वरूपसम्बन्धविशेषोऽतिरिक्तो वेत्यन्यदेतत् लक्षणसूत्रे पुनरुत्पत्तिरित्यत्र पुनः पदञ्च प्रेत्यभावप्रवाहस्यानादित्वज्ञापनाय तज्ज्ञानञ्च वैराग्य उपयुज्यत इति ॥ १० ॥

ननु प्रेत्यभाव उत्पत्तिनिरूप्यः सा च न सजातीयाद्विजातीयाद्वा सम्भवति आद्यपृथिव्यादौ व्यभिचारात्तन्नित्यत्वे मानाभावादतः प्रेत्यभावोऽसिद्ध इत्युपोद्घातात् प्रसङ्गाद्वोत्पत्तिप्रकारं दर्शयति । व्यक्तानामुत्पत्तिरिति शेषः व्यक्ताद्व्यक्तजातीयात् पृथिव्यादितः व्यक्तानां व्यक्तजातीयानां जन्यपृथिव्यादीनामुत्पत्तिः इत्यत्र पृथिव्यादेः पृथिव्यादितो रूपवदादितश्च रूपवदादीनामुत्पत्तेः प्रत्यक्षसिद्धत्वात्परमाणुरपि कल्प्यते त्रसरेणोरपकृष्टमहत्त्वेन सावयवावयवत्वसिद्धेस्तस्य लाघवान्नित्यत्वमिति भावः ॥ ११ ॥

अबुद्ध्वा शङ्कते । विशेषकार्यकारणभावाभावे सामान्यतोऽपि न तथेति भावः ॥ १२ ॥

विशेषतो व्यभिचारो न विरोधी सामान्यतस्तु नास्त्येवेत्याशयवान् समाधत्ते । सजातीयासजातीयोत्पत्तेर्न प्रतिषेधः पृथिवीजातीयात् कपालादितो घटादिनिष्पत्तेः उक्तापादनं चाप्रयोजकमिति भावः ॥ १३ ॥

समाप्तं प्रेत्यभावपरीक्षाप्रकरणम् ॥ ४२ ॥

अथाल्पाष्टौ प्रकरणानि प्रसङ्गाद्व्यक्तानामित्येतत्सिद्ध्यर्थमुपोद्घाताद्वा तत्रादौ शून्यतोपादानप्रकरणं तत्र पूर्वपक्षसूत्रम् । कार्य्याणां भावानामुत्पत्तिर्यतोऽङ्कुरादेर्बीजादिकमनुपमृद्य प्रादुर्भावाभावात् तथा च बीजादिविनाशोऽङ्कुराद्युपादानमिति ॥ १४ ॥

अतो त्तरम्। उपमृद्य प्रादुर्भवतीति न युक्तः प्रयोगव्याघातात् उपमर्दकस्य पूर्वमसत्त्वे उपमर्दकत्वायोगात् पूर्वं सत्त्वे च परतः प्रादुर्भावायोगात् ॥ १५ ॥

पूर्वपक्षी दूषयति। नायुक्तः प्रयोगः अतीतेऽनागते च कारकशब्दप्रयोगात् कर्तृकर्मादिबोधकशब्दप्रयोगात् यथा जनिष्यते पुत्रः जनिष्यमाणं पुत्रमभिनन्दति अभूत्कुम्भोभिन्नं कुम्भमनुशोचति ॥ १६ ॥

•नन्वास्तामौपचारिकः प्रयोगस्तथापि किं बीजादेर्विनष्टस्योपादानत्वं मन्यसे बीजादिविनाशस्य वा अन्येऽपि तस्योपादानत्वं निमित्तत्वं वा तत्रादौ उत्तरम्। विनष्टानां बीजादीनामुपादानत्वायोगादत एव न द्वितीयस्तत्र विनष्टं विनाशस्ततो नोत्पत्तिर्द्रव्यत्वस्य भावकार्य्यसमवायिकारणतावच्छेदकत्वात् ॥ १७ ॥

तृतीयेत्वाह। अभावस्य कारणत्वं न प्रतिषिध्यते प्रतिबन्धकाभावस्य हेतुत्वोपगमादित्याह क्रमेति बीजे विनष्टेऽङ्कुरो जायत इति प्रत्ययाद्बीजस्य प्रतिबन्धकस्याभावः कारणं बीजे विनष्टे हि तदवयवैर्जलाभिषिक्तभूम्यवयवसहितैरङ्कुर आरभ्यते अभावमात्रस्य कारणत्वे चूर्णीकृतादपि बीजादङ्कुरोत्पत्तिः स्यादभावस्य निर्विशेषत्वादिति भावः ॥१८॥

समाप्तं शून्यतोपादाननिराकरणप्रकरणम् ॥ ४३ ॥

मतान्तरमाह। अनेन ब्रह्मपरिणामवादो ब्रह्मविवर्त्तवादो वा दर्शित इति वदन्ति तथा हि ब्रह्मैव नामरूपप्रपञ्चभेदेन विपरिणमते मृत्तिकेवोदञ्चनादिभावेन अत एव प्राकृतरूपस्य सत्त्वस्यापरित्यागः प्रपञ्चेषु उदञ्चनादाविव मृत्तिकात्वस्येति परिणामवादः ब्रह्मैव चानाद्यनिर्वचनीयाऽविद्यावशान्नानारूपेण विवर्त्तते सुखमिव तत्तज्जल द्यालम्बनभेदादिति विवर्त्तवादः ननु पुरुषकर्मैव कारणमस्तु किमीश्वरस्य कारणत्वे नेत्यत आह पुरुषेति पुरुषकर्मणो हि वैफल्यमपि दृश्यते सहकार्य्यन्तरमवश्यं वाच्यं तथाचेश्वर एव यथा यथेच्छति तथा जगद्विपरिवर्त्तत इत्येवास्तु किं पुरुषकर्मणेति भावः वस्तुतस्तु केवलेश्वरकारणतापरं प्रकरणं तदुपादानतापरत्वे तु न किमपि मानमाकलयाम इति ॥ १९ ॥

समाधत्ते। केवलब्रह्मण एव हेतुत्वे तदिच्छाया अव्यतिरिक्तायास्त-

द्विषयतायाश्चानभ्युपगमादभ्युपगमे द्वैतापत्तिरतः सर्वं सर्वदा स्यान्न स्याच्च कार्य्यवैचित्र्यमिति पुरुषकर्मणोऽपि सहकारितावश्यकी ब्रह्मण उपादानत्वन्तु न सम्भवति असमवायिकारणासम्भवात्तस्य कारणतामात्रं स्विव्यत एवेति भावः ॥ २० ॥

नन्वेवं पुरुषव्यापारस्य फले व्यभिचारो न स्यादिति चेदत्राह । फलाभावस्य पुरुषकर्माभावकारितत्वात् पुरुषस्य कर्म अदृष्टन्तदभावाधीनत्वात्पुरुषकारः अहेतुः फलानुपधायकः नन्वीश्वर एव क इत्यत्र भाष्यं गुणविशिष्टमात्मान्तरमीश्वरः गुणैर्नित्यज्ञानेच्छाप्रयत्नैः सामान्यगुणैश्च संयोगादिभिर्विशिष्टमात्मान्तरं जीवेभ्यो भिन्न आत्मा जगदाराध्यः सृष्ट्यादिकर्त्ता वेदद्वारा हिताहितोपदेशको जगतः पितेति परेतु प्रसङ्गादीश्वरप्रतिपादनपरतात्त्रिसूत्री तथाहि ईश्वरः कारणम् अर्थाज्जन्यजातस्य अनुमानन्तु चित्यादिकं सकर्तृकं कार्य्यत्वाद्घटवदित्यूह्यं ननु जीवानामेव कर्तृत्वं स्यादत्राह पुरुषेति पुरुषकर्मणां वैफल्यं दृश्यते तथा च विफले कर्मणि प्रवर्त्तमानत्वादज्ञत्वं जीवानां यतः उपादानगोचरापरोक्षज्ञानादिमतो हि कर्तृत्वं न च चित्याद्युपादानगोचरज्ञानं जीवानामिति भावः नन्वदृष्टद्वारा जीवानां कर्तृत्वमस्त्वित्याशङ्कते न पुरुषेति फलस्य कार्य्यस्य कर्माभावेऽनिष्पत्तेः तत्तत्पुरुषोपभोगसाधनत्वात्तत्कर्मजन्यत्वमिति स्फोरणाय पुरुषेति समाधत्ते तदिति कर्मणोऽपि तत्कारितत्वादीश्वरकारितत्वादचेतनस्य चेतनाधिष्ठितस्यैव जनकत्वादिति भावः ॥ २१ ॥

समाप्तमीश्वरोपादानताप्रकरणम् ॥ ४४ ॥

यदि च कार्य्याणामाकस्मिकत्वं तदा न परमाण्वादीनामुपादानत्वं नवेश्वरस्य निमित्तत्वमत आकस्मिकत्वनिराकरणप्रकरणमारभते तत्र पूर्वपक्षसूत्रम् । अनिमित्तत इति प्रथमान्तात्तसिल् अनिमित्तभावोत्पत्तिरित्यर्थः भावेति स्पष्टार्थं घटाद्युत्पत्तिर्न कारणनियम्या उत्पत्तित्वात् कण्टकतैक्ष्ण्याद्युत्पत्तिवत् यद्वा घटादिकं न सकारणकं भावत्वात्कण्टकतैक्ष्ण्यादिवत् तैक्ष्ण्यं संस्थानविशेषः आदिपदान्मयूरचित्रादिपरिग्रहः तदकारणकमेवेत्याशयः ॥ २२ ॥

एकदेशी भ्रान्तो दूषयति । अनिमित्तत इति हेतुपञ्चमीनिर्देशाद-निमित्तस्यैव निमित्तत्वात् कथमनिमित्तत इति ॥ २३ ॥

दूषयति । अनिमित्तस्य निमित्तस्य च अर्थान्तरभावात् भेदात् उक्तः प्रतिषेधो न युक्तः अनिमित्तस्य निमित्तासम्भवात् शरीरस्याकर्मनिमित्तत्वदूषणेनैव च तद्दूषितप्रायमित्याशयेन नात्र दूषितमिति नव्यास्तु सूत्रद्वयीमेवं व्याचक्षते समाधत्ते अनिमित्तेति अनिमित्तस्य अनिमित्तत्वसाधकस्य निमित्तत्वादनिमित्तत्वानुमितिजनकत्वादनिमित्तत इति व्याहतम् अनिमित्तत्वानुमिति जनकानभ्युपगमेऽनिमित्तत्वं न सिध्येदिति कण्टकतैक्ष्ण्यादिकमपि नानिमित्तकं अदृष्टविशेषसहकृतैरणुभिस्तदुत्पादनादिति सूत्रद्वयं दोषान्तरमाह निमित्तेति इदमत्र निमित्तमिदमनिमित्तमिति प्रतीत्या तयोर्भेदसिद्धेर्निमित्तप्रतिषेधो न युक्तः इतरथा च सार्वलौकिकी प्रतीतिर्नोपपद्येतेति भावः ॥ २४ ॥

समाप्तमाकस्मिकत्वप्रकरणम् ॥ ४५ ॥

सर्वस्यैवानित्यत्वे नात्मादेरपि नित्यत्वं स्यादतः सर्वानित्यत्वनिराकरणप्रकरणं तत्र प्रमेयत्वं अनित्यत्वव्याप्यं नवेति संशये पूर्वपक्षसूत्रम् । अनित्यं विनाशि उत्पत्तिमतो विनाशधर्मकत्वात् उत्पत्तिमत्वञ्चाकाशादेरपि मेयत्वात् सिद्धमिति भावः तेन परमते तत्र नासिद्धिः यद्वा उत्पत्तिविनाशधर्मकत्वात् उत्पत्तिविनाशधर्मकाणां मानसिद्धत्वात्तद्भिन्नमप्रमाणकमिति सूत्रद्वयं परे तु अनित्यत्वं कादाचित्कत्वं उत्पत्तिधर्मकत्वाद्विनाशधर्मकत्वादिति हेतुद्वये तात्पर्यमित्याहुः ॥ २५ ॥

दूषयति । उत्पत्तिमत्त्वं न विनाशित्वसाधकं अनित्यताया ध्वंसस्य नित्यत्वादविनाशित्वात्तत्र व्यभिचारात् ॥ २६ ॥

आक्षिपति । तस्या अनित्यताया अप्यनित्यत्वं यथाग्निर्दाह्यस्येन्धनादेर्विनाशानन्तरं स्वयमपि नश्यति न तु दाह्योत्पन्नं तथा घटादेरपि नाशो नश्यति न घटाद्युत्पन्नं ध्वंसध्वंसस्यापि प्रतियोगिध्वंसत्वात् ध्वंसप्रागभावानाधारकालस्य प्रतियोग्यधिकरणत्वमिति व्याप्तेरप्रयोजकत्वान्नोत्पन्नमित्यन्ये ॥ २७ ॥

समाधत्ते । नित्यस्य नित्यत्वविशिष्टस्य नित्यत्वस्य न प्रत्याख्यानमिति

फलितं यथोपलब्धि उपलब्ध्यनतिक्रमेण तथा च धर्मिग्राहकमानेन लाघवसहकृतेनाकाशादेर्नित्यत्वव्यवस्थापनादिति ॥ २८ ॥

समाप्तं सर्वानित्यत्वनिराकरणप्रकरणम् ॥ ४६ ॥

सर्वनित्यत्वे न प्रेत्यभावादिसिद्धिरतस्तन्निराकरणप्रकरणं तत्राद्यं पक्षसूत्रम् । सर्वं नित्यं भूतत्वान्मेयत्वाद्वा तत्र दृष्टान्तप्रदर्शनाय पञ्चभूतनित्यत्वादित्युक्तं तेन परमाण्वाकाशदृष्टान्तता लभ्यते ॥ २९ ॥

समाधत्ते । सर्वनित्यत्वं न युक्तं घटादीनां उत्पत्तिविनाशकारणानां कपालसंयोगमुद्गरपातादीनां उपलब्धेस्तथाचोत्पादविनाशावावश्यकाविति ॥ ३० ॥

पुनः साङ्ख्य आह । उक्तप्रतिषेधो न नित्यस्य परमाण्वादेर्यल्लक्षणं भूतत्वादि घटादौ तदवरोधात् तत्त्वेन तथाचोत्पादादिप्रत्ययो भ्रान्त इति भावः ॥ ३१ ॥

दूषयति । अनित्यत्वनिषेधो न युक्तः उत्पत्तेस्तत्कारणात्तत्प्रमापकादुपलब्धेः तथाचोत्पादविनाशप्रतीतेः प्रामाणिकत्वान्नतन्निषेध इतरथा कादाचित्कत्वप्रतीत्यनुपपत्तेः नचाविर्भावात्तदुपपत्तिस्तस्यैवानित्यत्वे सर्वनित्यत्वव्याघातात् । विवेचयिष्यते चेदं स्पष्टतरमुपरिष्टात् ॥ ३२ ॥

उत्पादविनाशप्रत्ययस्य भ्रान्तत्वं स्यादित्याशङ्क्याह । सार्वलौकिकप्रमात्वेन सिद्धस्यापि भ्रमत्वशङ्कायां प्रमाभ्रमव्यवहारविलोपः स्यादित्यर्थः ॥ ३३ ॥ समाप्तं सर्वनित्यत्वनिराकरणप्रकरणम् ॥ ४७ ॥

अथ प्रसङ्गात्सर्वपृथक्त्वप्रकरणं तत्र पूर्वपक्षसूत्रम् । सर्वं वस्तु पृथक् नाना लक्ष्यतेऽनेनेति लक्षणं समाख्या तस्याः पृथक्त्वं पृथगर्थकत्वं तथा च प्रयोगः घटादिः समूहरूपः वाच्यत्वात् सेनावनादिवत् अतीन्द्रिये गगनादौ मानाभावादात्मनः शरीरानतिरेकाद्गुणकर्मणोराश्रयाभेदाद्विशेषसमवाययोर्मानाभावादभावस्य तुच्छत्वान्न व्यभिचारः यद्वा घटादिकं स्वस्मादपि पृथग्भावलक्षणानां गन्धरसादीनां तत्तदवयवादीनाञ्च पृथक्त्वात् घटादेश्च तदभेदादिति भावः ॥ ३४ ॥

समाधत्ते । अनेकलक्षणैरनेकस्वरूपैरूपरसादिभिस्तत्तदवयवैश्च विशिष्टस्यैकस्यैव भावस्य निष्पत्तेरुत्पत्तेरित्यर्थः तथाचैकस्य धर्मिणः प्रत्य-

त्वादिप्रमाणसिद्धत्वात् तस्य च चाक्षुषत्वरासनत्वादिविरुद्धधर्माध्यस्तरूपरसाद्यात्मकत्वाभावादवयवानाञ्च कारणत्वात् कार्य्यकारणयोरभेदासम्भवाच्च न तत्तदात्मकत्वं घटादेः सम्भवतीति भावः ॥ ३५ ॥

हेतुमाह। लक्षणस्य अर्थाद्भावानां घटपटादीनां व्यवस्थानाद्व्यवस्थितत्वादेवाप्रतिषेधः पृथक्त्वव्यवस्थापनं नेत्यर्थः कपालसमवेतद्रव्यत्वादिकं हि घटादेर्लक्षणं कपाले घट इत्यादिप्रतीतिसिद्धं न चेदं समूहात्मकत्वे सम्भवति एवं लक्षणस्य घटादिस्वरूपस्य यमहमद्राक्षं स्पृशामीति प्रत्यक्षेण व्यवस्थितत्वात् परमाणोश्चाप्रत्यक्षत्वान्न तत्सम्भवः किञ्च समूहलक्षणव्यवस्थितेरेव नोक्तं युक्तं समूहो हि नानाव्यक्तिसमुदायः स च नैकव्यक्तेरनभ्युपगमे सिध्यतीति भावः ॥ ३६ ॥

समाप्तं सर्वपृथक्त्वनिराकरणप्रकरणम् ॥ ४८ ॥

सर्वशून्यत्वेन कार्य्यकारणभावासम्भव इति तन्निराकरणप्रकरणमारभते तत्र ज्ञानविषयत्वमभावत्वव्याप्यं न वेति संशये पूर्वपक्षसूत्रम्। सर्वं विवादपदमभावस्तुच्छं तत्र प्रत्यक्षं मानमाह भावेष्विति भावत्वाभिमतेषु घटादिषु अभावत्वसिद्धेः घटः पटो नेत्यादि प्रतीत्या सर्वेषामभावत्वसिद्धेः ॥ ३७ ॥

सिद्धान्तसूत्रम्। भावानां पृथिव्यादीनां स्वभावस्य गन्धादेः सत्त्वादेश्च सिद्धेः न हि तुच्छस्य गन्धरूपादिकं सत्त्वेन प्रतीतिर्वा सम्भवति ॥ ३८ ॥

पुनः शङ्कते। न हि सर्वेषां भावानामेकः स्वभावः सम्भवति आपेक्षिकत्वात् भिन्नत्वात् भिन्नस्य स्वभावत्वे स्वस्मादपि भेदापत्तेः यद्वा इतरसापेक्षत्वात् एतदपेक्षयाऽयं नीलतर एतदपेक्षया ह्रस्व इति प्रतीतेः यच्च सापेक्षन्तदवस्तु यथा जवासापेक्षं स्फटिकारुण्यम् ॥ ३९ ॥

समाधत्ते। सापेक्षत्वस्य तुच्छत्वव्याप्तेर्व्याहतत्वादसिद्धत्वात् न वा घटादेः सापेक्षत्वं सम्भवति किञ्च सापेक्षत्वं सापेक्षं न वा आद्ये तस्य तुच्छत्वान्न साधकत्वं अन्त्ये तस्यैव सत्यत्वात् कुतः सर्वशून्यत्वमिति भावः ॥ ४० ॥

समाप्तं सर्वशून्यतानिराकरणप्रकरणम् ॥ ४९ ॥

अथ संख्यैकान्तवादनिराकरणप्रकरणं तत्र भाष्यं अथेमे संख्यैकान्तवादाः सर्वमेकं सदविशेषात् सर्वं द्वेधा नित्यानित्यभेदात् सर्वं त्रेधा

ज्ञाता ज्ञेयं ज्ञानमिति सर्वं चतुर्धा प्रमाता प्रमाणं प्रमेयं प्रमितिरिति एवं यथासम्भवमन्येऽपि तत्र यथा नित्यत्वानित्यत्वलक्षणधर्म्माभ्यां द्वैधं तथा सत्त्वेनैकमिति स्पष्टोऽर्थः परेत्वेवं व्याचक्षते एकमित्यद्वैतवादस्तथा च ब्रह्मैवैकं निर्विशेषं सत्यं सर्वमन्यन्मिथ्या यद्वा सर्वं प्रपञ्चजातं एकं द्वैतशून्यं सदविशेषात् घटः सन् पटः सन्निति प्रतीतेः घटाभिन्नसदभिन्नपटस्य घटाभेदसिद्धेः श्रुतिरपि एकमेवाद्वयं ब्रह्म नेह नानास्ति किञ्चनेत्यादि अन्येऽपीत्यनेन रूपसंज्ञासंस्कारवेदनानुभवाः पञ्चस्कन्धा इति सौत्रान्तिका इत्यादिसमुच्चयः एतेष्वाक्षेपेषु सिद्धान्तसूत्रम्। सङ्ख्यैकान्ता न सिध्यन्ति कारणस्य प्रमाणस्यानुपपत्तेः उपपत्तौ वा न सङ्ख्यैकान्तः साधनस्य साध्यातिरिक्तस्यापेक्षितत्वात् ॥ ४१ ॥

आक्षिपति। न सङ्ख्यैकान्तस्यासिद्धिः कारणस्य प्रमाणस्यावयवभावात् उक्तस्यैकदेशत्वादवयवावयविनोश्च भेदाभावः ॥ ४२ ॥

दूषयति। उक्तो हेतुर्न युक्तः सर्वस्यैव पक्षत्वेनावशिष्टस्याभावात्पक्षैकदेशस्य हेतुत्वासम्भवादिति भावः श्रुतिस्तु ब्रह्मैक्यपरेति एतच्च नास्माकं रोचते सत्त्वेनैक्यस्य नित्यानित्यभेदाद्द्वैविध्यादेश्चाभ्युपगतत्वादनित्यस्याप्यनुमानस्य नित्यानित्यसाधकत्वे विरोधाभावात् कथमितरथा षट्पदार्थौ सप्तपदार्थौ च सिध्येदिति तस्मादद्वैतवादनिराकरणपरत्व एव प्रकरणं सङ्गच्छत इति संक्षेपः ॥ ४३ ॥

समाप्तं संख्यैकवादप्रकरणम् ॥ ५० ॥

अथावसरतः फले परीक्षणीये संशयमाह। पाकादिक्रियायाः सद्यः फलकत्वस्य कृष्यादेः कालान्तरफलकत्वस्य दर्शनादग्निहोत्रहवनादेर्हिंसादेर्वा फलं साद्यस्कं कालान्तरीणं वेति संशयः ॥ ४४ ॥

तत्रैहिककीर्त्यादीनामेव फलत्वसम्भवे नादृष्टादिकल्पनमिति पूर्वपक्षे सिद्धान्तसूत्रम्। कालान्तरोपभोग्यत्वेन प्रतिपादनादित्यर्थः स्वर्गो हि फलं श्रूयते स च दुःखासम्भिन्नसुखं न चैहिकं सुखं तथा एवं हिंसादेस्तत्तन्नरकोपभोगः फलं श्रूयते न चेह तत्सम्भव इति भावः ॥ ४५ ॥

शङ्कते। कालान्तरेण तत्तत्कर्मणः फलं न सम्भवति हेतोस्तत्कर्मणो विनाशात् ॥ ४६ ॥

समाधत्ते। स्वर्गादिनिष्पत्तेः प्राक् तद्द्वारं स्यात् दृष्टान्तमाह वृक्ष-फलवत् यथा मूलसेकादिनाशेऽपि तदधीनावयवोपचयादिद्वारबलेन फलोत्पत्तिस्तथा प्रकृतेऽपि यागादिनाशेऽपि तज्जन्यादृष्टरूपद्वारसत्त्वान्न स्वर्गाद्युत्पत्तिविरोधः ॥ ४७ ॥

ननु कार्यकारणभाव एव न विचारसह इत्याशङ्कते। प्राङ्निष्पत्तेरित्यनुवर्त्तते फलमित्यध्याहर्त्तव्यं तथा चोत्पत्तेः प्राक् फलं नासत् असत उत्पत्तौ शशशृङ्गादेरप्युत्पत्तिः स्यात् स्याच्च सिकतादावपि तैलं नवासत् सत उत्पत्तिविरोधात् अतएव न सदसत्सदसतोः सत्त्वासत्त्वलक्षणवैधर्म्यात् ॥ ४८ ॥

## प्रागुत्पत्तेरुत्पत्तिधर्मकमसदित्यद्धा उत्पादव्ययदर्शनात् ॥ ४९ ॥

समाधत्ते। उत्पत्तिधर्मकं उत्पत्तिधर्मकत्वेनोपलभ्यमानं पटादिकमुत्पत्तेः प्रागसदिति अद्धा तत्त्वम् उत्पादनाशयोः प्रमितत्वात् इदानीं घट उत्पन्न इदानीं घटोविनष्ट इति प्रत्ययात् सतस्तु नोत्पत्तिसम्भव उत्पन्नपुनरुत्पादप्रसङ्गात् यद्यपि नाशस्य तत्र हेतुत्वं तथाप्यनुत्पन्नभावस्य नाशायोगादुत्पादसाधकत्वेन नाश उक्तः ॥ ४९ ॥

असत उत्पत्तौ नियमो न स्यादित्यत आह। तत्कार्य्यम् असत् प्रागभावप्रतियोगिबुद्धिसिद्धं बुद्ध्या विषयीकृतं तथा हि इह तन्तुषु पटो भविष्यतीति ज्ञात्वा कुविन्दः प्रवर्त्तते न तु पटोऽस्तीति ज्ञात्वा तथा सति सिद्धत्वेन ज्ञात इच्छाऽभावात् प्रवृत्त्यनुपपत्तेः सिकतादौ पटो भविष्यतीति न ज्ञायते किन्तु न भविष्यतीति ज्ञायत एव कुत इति चेदनुभवमपृच्छः किञ्च त्वन्मतेऽपि कुतो न ज्ञायते तत्र पटाभावादिति चेत् कथमिदं निरणायि पटात्पूर्वं तन्तुसिकतयोस्तुल्यत्वात् तन्तुत्वेनाश्रयतेति चेत्तन्तुत्वेन कारणतेत्येवं स्यात् प्रवृत्त्यनुरोधात् ॥५०॥

नन्वस्तु हेतुफलभावस्तथापि वृक्षफलवदिति दृष्टान्तवैषम्यान्नादृष्टसिद्धिरित्याशयेन शङ्कते। प्राङ्निष्पत्तेर्वृक्षफलवदित्यहेतुः कुत आश्रय-

व्यतिरेकात् येन कायेन कर्मकृतं तस्य नाशात् वृक्षस्थले तु तस्य वृक्षस्य कृत्वात् सलिलसेकादिकं परिकर्मोपयुज्यत इत्यभिमानः ॥ ५१ ॥

समाधत्ते। आश्रयव्यतिरेकादिति हेतुर्न युक्तः प्रीतेः सुखस्य स्वर्गिशरीरावच्छेदेन जायमानस्यात्मवृत्तित्वाद्यागादिसामानाधिकरण्यादित्यर्थः ॥ ५२ ॥

क्वचित्सामानाधिकरण्यसम्भवेऽपि सर्वत्र न तथेति शङ्कते। पुत्रादीनां फलनिर्देशात् सामानाधिकरण्यं न सम्भवतीति भावः ॥ ५३ ॥

यद्यपि पुत्रादीनामैहिकफलत्वात्तत्राश्रयव्यतिरेकाभावात् शङ्कैव न तथापि यत्र जन्मान्तरीयधनादिकमपि फलं स्यात्तत्रापि नानुपपत्तिरित्याशयेनाह। तत्र सम्बन्धात्पुत्रादिसम्बन्धात्फलनिष्पत्तेः प्रीत्युत्पत्तेः तेषु पुत्रादिषु फलवदुपचारः फलत्वेन व्यपदेशः यथाऽन्नं वै प्राणिनां प्राणा इति ॥ ५४ ॥ समाप्तं फलपरीक्षाप्रकरणम् ॥ ५० ॥

अथ क्रमप्राप्तं दुःखं परीक्षणीयं तत्र च बाधनालक्षणं दुःखमित्युक्तं तदर्थस्तु दुःखत्वजातिमत्त्वमित्युक्तं तच्च शरीरादौ दुःखेऽव्याप्तमित्याशङ्क्याह। जननयोगाज्जनकशरीरादिकं तदुत्पत्तिस्तत्सम्बन्धः विविधबाधनायोगात् दुःखमिति व्यपदिश्यते न तु वास्तवमेव तत् दुःखं तथा च विविधदुःखानुषक्ततया हेयत्वार्थं दुःखमिति भावनीयमुपदिश्यते ॥ ५५ ॥

ननु दुःखभावनेन किं सुखं प्रत्याख्यायते न चैतच्छक्यमत आह। दुःखानां मध्ये सुखस्याप्युत्पत्तेस्तत्प्रत्याख्यानस्याशक्यत्वात् ॥ ५६ ॥

ननु सुखदुःखसम्बन्धाविशेषात् सुखभावनमेव किं नेष्यत इत्यत्राह। दुःखभावनस्य न प्रतिषेधः वेदयतः सुखसाधनत्वं जानतः पर्य्येषण दोषात् पर्य्येषणे सुखार्थप्रवर्त्तने दोषात् सुखार्थप्रवर्त्तमानो हि अर्जनपालनादौ विविधाभिर्बाधनाभिरुपतप्यतेऽतोदुःखभावनं वैराग्यहेतुतयोपदिश्यते ॥ ५७ ॥

ननु दुःखमनुभवतः स्वत एव निवृत्तिसम्भवात् दुःखभावनोपदेशो व्यर्थ इत्यत आह। दुःखस्य विविधः कल्पो यत्र तादृशे प्रतिषिद्धहिंसाभोजनमैथुनादौ प्रवृत्तिर्माभूदित्ययमुपदेश इति भावः ॥ ५८ ॥

समाप्तं दुःखपरीक्षाप्रकरणम् ॥ ५१ ॥

अथ क्रमप्राप्ततयाऽपवर्गः परीक्षणीयः तत्र च तदर्थकप्रवृत्तिकाला-

भावात्तद्भाव इति पूर्वपक्षयति। ऋणाद्यनुबन्धादपवर्गानुष्ठानकाला-भावादपवर्गाभावः स्यात् तथा च श्रूयते जायमानो ह वै ब्राह्मणस्त्रिभिः ऋणवान् जायते ब्रह्मचर्य्येण ऋषिभ्यः यज्ञेन देवेभ्यः प्रजया पितृभ्य इति इति ऋषिभ्यः ऋषिऋणेभ्यो ब्रह्मचर्य्येण मुच्यते देवेभ्यः देवर्णेभ्यः यज्ञेन मुच्यते प्रजया अपत्येन पितृणेभ्योमुच्यते ऋणापाकरणेनैव च जीवनाप-गमः तथा च श्रूयते तत्सत्रं यदग्निहोत्रं दर्शपौर्णमासौ च जरयाहवा एष तस्माद्विमुच्यते मृत्युनाचेति ऋणापाकरणमन्तरेण च न तत्र प्रवृत्तिः तथा च स्मर्य्यते ऋणानि त्रीण्यपाकृत्य मनोमोक्षे निवेशयेत्। अनपा-कृत्य मोक्षन्तु सेवमानो व्रजत्यधः एवं क्लेशानुबन्धादपि पुरुषो हि रागा-दिभिस्तत्तत्कर्माण्यारभमाणः क्लेशानुविद्ध एव दृश्यते तत्कथमपवर्गः एवं प्रवृत्त्यनुबन्धादपि पुरुषो हि वाग्बुद्धिशरीरैस्तत्तत्कर्माण्यारभमाणो धर्मा-धर्मौ यावज्जीवमुपार्जयन् कथमपवृज्यतामिति॥ ५९॥

समाधत्ते। जायमान इत्याद्यनुवादो हि प्रधानशब्दः न हि जाय-मानः कर्मण्यधिक्रियते तथा च भाष्यं यदा तु मातृतो जायते कुमारको न तदा कर्मभिरधिक्रियते अर्थिनः शक्तस्य चाधिकारादिति जायमान इत्यनेन कोवा व्यावर्त्तनीयः नह्यजातस्य प्रसक्तिरस्ति येनासौ व्यावर्त्त-नीयः तत्र भाष्यं जायमान इति गुणशब्दो विपर्ययेऽनधिकारादिति तथा च जायमान इत्यनेनोपनीत उच्यते तस्य ब्रह्मचर्य्यादावधिकारात् अग्निहोत्रादौ गृहस्थस्याधिकारः क्षौमे वसानो वाधीयतामिति श्रुतेः एवमृणशब्दोऽपि न मुख्यः नह्यत्र प्रत्यादेयं कश्चन ददाति परन्तु ऋणा-पाकरणवदावश्यकत्वख्यापनाय तयोक्तं लाक्षणिकशब्दप्रयोगे वीजमाह निन्दाप्रशंसोपपत्तेः ऋणानपाकरणतदपाकरणाभ्यामिवाग्निहोत्राद्यक-रणतत्करणाभ्यां निन्दाप्रशंसे उपपद्येते नचानुष्ठानकालाभावः जरया-विमुच्यत इत्युक्तेः न च जरयाऽशक्तिरुच्यते अन्ते वासी वा जुहुयात् ब्रह्मणा हि स परिक्रीण इत्यादिनाऽशक्तस्यापि विधानात् तस्मादायुष-श्चतुर्थभागो जरेत्युच्यते किञ्च जरामर्य्यवादः कामनाभिप्रायेण तथा च भाष्यम् अर्थित्वस्य चापरिणामे जरामर्य्यवादोपपत्तेरिति अर्थित्वं का-

मना तदपरिणामे तदनाशे कर्मकरणाभिप्रायेण जरामर्य्यवाद उपपद्यते ॥ ६० ॥

ननु काम्यानां कामनाविरहेण त्यागसम्भवेऽपि नित्यानां कथं त्यागः श्रूयते हि यावज्जीवमग्निहोत्रं जुहुयादिति तत्राह । अपवर्गप्रतिषेधो न युक्तः अग्नीनामात्मनि समारोपविधानात् श्रूयते प्राजापत्यामिष्टिं निरूप्य तस्यां सर्ववेदसं दत्वात्मन्यग्नीन् समारोप्य ब्राह्मणः प्रब्रजेदिति अतएव चत्वारः पन्थानो देवयाना इति चातुराश्रम्यश्रुतिरपि सङ्गच्छते ॥ ६१

## पात्रचयान्तानुपपत्तेश्च फलाभावः ॥ क ॥

नन्वग्निहोत्रस्याप्रतिबन्धकत्वेऽपि तत्फलस्वर्ग एवापवर्गप्रतिबन्धकः स्यादत्राह । ज्ञानिनः फलस्य स्वर्गस्याभावः अग्निहोत्रं हि पात्रचयान्तं पात्राण्यग्निहोत्रपात्राणि तेषाञ्चयः प्रमीतस्य यजमानस्याङ्गेषु विन्यासः मुखे घृतपूर्णां स्रुचमिति क्रमेण भिक्षोस्तदनुपपत्तेः तेन तत्परित्यागात् अग्निहोत्रफलाभावेऽपि ज्योतिष्टोमगङ्गास्नानादिहिंसादिफलानां प्रतिबन्धकत्वं स्यादतो हेत्वन्तरसमुच्चयाय चकार उपन्यस्तस्तथा च प्रारब्धातिरिक्तकर्मणां ज्ञानादेव क्षय इत्याशयः श्रूयते हि तथा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति एवं क्षीयते चास्य कर्माणि तस्मिन् दृष्टे परावरे । स्मर्य्यते ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथेति इत्यञ्च कामनाशून्यस्य प्रजोत्पादोऽपि नापवर्गविरोधी तथा च श्रूयते एतद्धस्म वै पूर्वे ब्राह्मणा अनूचाना विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नायमात्मालोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय भिक्षाचर्य्यं चरन्तीति अन्ये तु फलाभावः फलस्य मुमुक्षून् प्रति अग्निहोत्रादौ प्रयोजकत्वाभावस्तथा सति भिक्षूणामपि पात्रचयान्तं स्यादित्यर्थ इत्याहुः ॥ क ॥

क्लेशानुबन्धं दूषयति । स्वप्नादर्शनकाले सुषुप्तस्य यथा हेत्वभावेन दुःखाभावस्तथाऽपवर्गेऽपि रागाद्यभावेन दुःखाभावः स्यात् ॥ ६२ ॥

प्रवृत्त्यनुबन्धादपवर्गाभावं दूषयति । क्लिश्यन्तेऽनेनेति क्लेशो रागादिः

तद्विरहिणो या प्रवृत्तिः सा प्रतिसन्धानाय प्रतिसन्धाय न भवति धर्माधर्मौ न जनयतीत्यर्थः॥ ६४॥

क्लेशाभावमसहमानः शङ्कते। क्लेशसन्ततेरुच्छेदो न युक्तः स्वाभाविकत्वात्॥ ६५॥

एकदेशी समाधत्ते। प्रागुत्पत्तेरभावानित्यत्ववत्प्रागभावानित्यत्ववत् अनादेः परमाणुश्यामतायाविनाशवद्वा विनाशः॥ ६६॥ ६७॥

अनित्यत्वं विनाशिभावत्वं न च तत्प्रागभावे नवाऽणुश्यामतादिरनादिस्तथा च भाष्यम् अनादिरणुश्यामतेति हेत्वभावादयुक्तमित्यतो मतद्वयमुपेक्ष्य सिद्धान्तमाह। नोक्तं युक्तं कुतो रागादीनां सङ्कल्पनिमित्तत्वात् सङ्कल्पो मिथ्याज्ञानं निमित्तं येषां तथा च तत्त्वज्ञानेन मिथ्याज्ञाननिवृत्तौ रागादिनिवृत्तिर्युज्यत एवेति भावः॥ ६८॥

समाप्तमपवर्गपरीक्षाप्रकरणम्॥ ५२॥

समाप्तं चतुर्थाध्यायस्य प्रथममाह्निकम्॥१॥

---

अथ शास्त्रस्य परमं प्रयोजनमपवर्गः स चोद्दिष्टो लक्षितः परीक्षितोऽप्यकिञ्चित्करः कारणानिरूपणात् नन्वभिहितमेव दुःखादिसूत्रे कारणनाशक्रमेण दुःखाभावोऽपवर्गः इतीति चेत्सत्यं मिथ्याज्ञानापगमहेतुर्नाभिहितः तत्त्वज्ञानं तत्र हेतुरिति चेत् कस्य वा तत्त्वं ज्ञातव्यमित्यभिधानीयमित्याशयेन तत्त्वज्ञानपरीक्षा सैव चाह्निकार्थः तत्र च षट्प्रकरणानि आदौ तत्त्वज्ञानोत्पत्तिप्रकरणम् अन्यानि च यथायथं वक्ष्यन्ते तत्र सिद्धान्तसूत्रम्। अहङ्कारोऽहमित्यभिमानः स च शरीरादिविषयको मिथ्याज्ञानमुच्यते तच्च दोषनिमित्तानां शरीरादीनां तत्त्वस्य अनात्मत्वस्य ज्ञानान्निवर्त्तते आत्मत्वेन हि शरीरादौ इह्यनु रञ्जनीयत्वात् रज्यति कोपनीयेषु कुप्यति केचित्तु दोषनिमित्तानां रागादीनां तत्त्वज्ञानाद्दूलवदनिष्टानुबन्धित्वज्ञानादहङ्कारस्याभिलाषस्य निवृत्तिरित्यर्थः इत्याहुः॥ १॥

ननु के तावदनुरञ्जनीया विषयाः येषु रज्यन्तु संसरतीत्यतो विवे-

काय तानुपदिशति । सङ्कल्पः समीचीनत्वेन भावनं तद्विषयीकृतारूपादयः दोषस्य रागादेर्निमित्तं सुन्दरीयमिति जानन् रज्यति मत्तरयमिति द्वेष्टि ते रूपादयो हेयत्वेन भावनीयाः प्रथमं ततः शरीरात्मविवेकः ॥२॥

ननु सौन्दर्य्यादिकं पश्यतो रागादिर्मुमुक्षोरपि दुष्परिहरः तदुक्तं चञ्चलं हि मनः कृष्णप्रमाथिबलवद्दृढमित्यतो रागादिनिवृत्त्युपायं दर्शयिष्यन्नाह । अवयविनि तत्त्वग्यादिशरीरे अभिमानः सपरिष्कारबुद्धिस्तन्निमित्तं रागादिनिमित्तं तथा च सा बुद्धिर्हेया अतएव भाष्यादौ परिष्कारबुद्धिरनुरञ्जनसंज्ञा सा हेया दोषदर्शनमशुभसंज्ञा सा भावनीयेति अनुरञ्जनसंज्ञाय यथा खेलत्खञ्जननयना परिणतबिम्बाधरा पृथुश्रोणी । कमलमुकुलस्तनीयं पूर्णेन्दुमुखी सुखाय मे भवितेति अशुभसंज्ञा यथा चर्मनिर्मितपात्रीयं मांसासृक्पूयपूरिता अस्यां रज्यति यो मूढः पिशाचः कस्ततोऽधिकः । स्वशरीरादौ अप्यशुभसंज्ञैव भावनीया एवं कोपनीयेऽपि शुभसंज्ञा । कां द्वेष्मि दुराचार इत्यादिषु यथेष्टतः । कण्ठपीठं कुठारेण छित्वास्य स्यां सुखी कदा । अशुभसंज्ञा तु मांसासृक्कीकसमयो देहः किं मेऽपराध्यति एतस्मादपरः कर्त्ता कर्त्तनीयः कथं मयेति ॥ ७० ॥ समाप्तं तत्त्वज्ञानोत्पत्तिप्रकरणम् ॥ २ ॥

अथ प्रसङ्गादवयविप्रकरणं वस्तुतस्तु शरीरे धर्मद्वयस्य सम्बन्धेऽपि एकं ध्येयमपरं हेयमिति निर्युक्तिकम् अतोऽवयवी नास्ति किन्तु परमाणुपुञ्ज इति तत्त्वं तदेव तन्मुमुक्षुभि भावनीयं परमाणुपुञ्ज इत्यप्यापाततः परमाणोरप्यग्रे निराकरिष्यमाणत्वादिति सौगतशङ्कामपाकर्त्तुमयमारम्भः यद्यपि द्वितीयाध्याये व्यवस्थापित एवावयवी तथापि स्वयुक्तिदार्ढ्येन सौत्रान्तिकस्य वैभाषिकस्य चात्र प्रत्यवस्थानमिति तत्र संशयप्रदर्शनाय सूत्रम् । संशय इत्यस्य अवयविनीत्यादिः अवयविनः प्रत्यक्षसिद्धत्वात् तदपलापो दुःशक्य इत्यत उक्तं विद्येति प्रमाप्रमभेदेन ज्ञानद्वैविध्यात् ज्ञानत्वलक्षणसाधारणधर्मदर्शनात् ज्ञाने प्रामाण्यसंशयादवयविनि संशय इत्यर्थः ॥ ४ ॥

समाधत्ते । तत्रावयविनि न संशयः पूर्वहेतुप्रसिद्धत्वात् द्वितीयाध्यायोक्तयुक्तिभिरवयविनः प्रकर्षेण सिद्धत्वात् ॥ ५ ॥

अवयविनि बाधकं शङ्कते । अपरिवधारणे तर्हि संशयानुपपत्तिवृत्त्यनुपपत्तितोऽवयव्यभावादेव स्यादित्यर्थः वृत्त्यनुपपत्तिं विवृणोति भाष्यकारः कृत्स्नैकदेशवृत्तित्वादवयवानामवयव्यभावः अवयवी हि एकैकावयवे कात्स्न्र्येन एकदेशेन वा नाद्यः विषमपरिमाणत्वात् अन्त्येऽपि तेनैवावयवेनान्येन वा नाद्यः स्वस्मिन्वृत्तिविरोधात् नान्त्यः अवयवान्तरस्यावयवान्तरावृत्तेः तथापि कथमवयव्यभाव इत्यत्र भाष्यं तेषु चावृत्तेरवयव्यभावः तेषु अवयवेषु पूर्व्वोक्तयुक्त्या अभावादवयवी नास्ति नह्यसावहत्तिस्तथाऽभ्युपेयत इति भावः सूत्रमेवेदमित्यपि वदन्ति ॥ ६ ॥

नन्वास्तामवृत्तिरेवावयवीति शङ्कायां पूर्व्वपक्षिसूत्रम् अवयवेभ्यः पृथक् अवयवी नास्तीति शेषः तेषु चावृत्तेरित्यस्य सूत्रत्वे अवयव्यभाव इत्यनुवर्त्तते कुतः अवृत्तेः वृत्त्यभावेऽवयविनो नित्यत्वप्रसङ्गः न च नित्योऽवयव्युपलभ्यते ततो नास्त्येवावयवीति भावः यद्वा कृत्स्नैकदेशाभ्यामवयवी न वर्त्तते किन्तु स्वरूपेणैवेति शङ्कायां पूर्वपक्षिणः सूत्रं पृथगिति अवयवेभ्यः पृथगवयवी नास्ति कुतः अवृत्तेः अवृत्तित्वप्रसङ्गात् तथा सति नित्यं स्यादिति भावः कश्चित्तु अवयवातिरिक्तोऽवयवी वर्त्ततामित्यत्र पूर्वपक्षिणः सूत्रं पृथगिति पूर्व्वोक्तयुक्त्याऽवयवेभ्यः पृथगप्यवृत्तेः ॥८॥

नन्ववयवावयविनोस्तादात्म्यमेव सम्बन्धः स्यादत आह । नहि तन्तुः पटस्तस्मोऽत्रहमिति कश्चित्प्रत्येति नवाऽभेदेनाधाराधेयभाव उपपद्यते॥१०

सिद्धान्तसूत्रम् । अवयवी कात्स्न्र्येन एकदेशेन वा वर्त्तत इति प्रश्नोन युक्तः एकस्मिन्नवयविनि भेदाभावाद्भेदनियतशब्दप्रयोगस्यायुक्तत्वात् अनेकस्याशेषता हि कात्स्न्र्यं समुदायिनां किञ्चित्त्वनेकदेशत्वं नचैकस्य तत्सम्भव इति भावः ॥ ११ ॥

इतश्च वृत्तिविकल्पोन युक्त इत्याह । अवयवी स्वावयवेषु नैकदेशेन वर्त्तते अवयवान्तराभावादिति यः परेषां हेतुः स न युक्तः कुतः अवयवान्तरभावेऽप्यवृत्तेः अवयवान्तरसत्त्वेऽपि तस्यैव परं वृत्तिरायाति न त्ववयविनोऽपीति यद्वा अवृत्तेर्वर्त्तनाभावस्य कृत्स्नैकदेशविकल्पो न हेतुः कुतः अवयवान्तरस्य अवयविभिन्नस्य अवयस्य भावेऽपि सत्त्वेऽपि सम्भवात्

घटत्वादिवत् स्वरूपेणैवावयविनो वृत्तेः सम्भवात् वृत्तेः कृत्स्नैकदेशान्यतरनियमो घटत्वादौ व्यभिचारादप्रयोजकमिति भावः ॥ १२ ॥

तत्संशयः पूर्वहेत्वप्रसिद्धत्वादित्यनेन सर्व्वाग्रहणमवयव्यसिद्धेरिति पूर्व्वोक्तायुक्तिः स्मारिता पूर्वपक्षी तां दूषयितुमुपक्रमते। यथा तैमिरिकस्य तिमिरग्रस्तचक्षुषो नैकः केशः प्रत्यक्षः किन्तु तत्समूहः एवमेकः परमाणुरप्रत्यक्षः तत्समूहरूपो घटादिः प्रत्यक्षः स्यात् ॥१३॥

उत्तरयति। इन्द्रियाणां पाटवे विषयग्रहणस्य पाटवं प्रकर्षः इन्द्रियाणां मान्द्ये तद्ग्रहणस्य मान्द्यमपकर्षः न तु पटुतरं चक्षुः शब्दं गृह्णाति तदिदमुक्तं स्वविषयानतिक्रमेणेति फलितार्थमाह नाविषये वृत्तिरिति तथा च स्वाविषयं परमाणुं समूहत्वापन्नमपि कथं चक्षुर्गृह्णीयादिति भावः ॥ १४ ॥

दोषान्तराभिधानाय सूत्रम् एवमुक्तप्रकारेण वृत्तिविकल्पदोषोऽवयविन्यवयवे च प्रसक्तः आप्रलयात् प्रलयेऽभावस्तथा च सर्व्वाभाव एव स्यान्न कस्यापि ग्रहणमिति साधूक्तं सर्व्वाग्रहणमवयव्यसिद्धेरिति ॥१५॥

अस्तु सर्व्वाभाव इत्यत आह। आश्रयनाशाद्यभावेन परमाणोर्नाशाभावेन तदसम्भवात् यद्वा नन्ववयवावयविप्रवाहस्त्वया प्रलयपर्य्यन्तं स्वीकार्य्यः प्रलये च निखिलपृथिव्यादिनाशात्पुनः सर्गेण स्यादित्याशयेन शङ्कते अवयवेति समाधत्ते नेति न सकलपृथिव्यादिनाशः परमाणुसद्भावादित्यर्थः ॥ १६ ॥

परमाणुरेव क इत्यत आह। त्रुटेः परं यदतिसूक्ष्मं तत्परमाणुः वाशब्दोऽवधारणे अथ वा त्रुटेरवयवस्तदवयवो वा परमाणुरिति विकल्पार्थो वाशब्दः यद्वा त्रुटेः परं सूक्ष्मं परमाणुः त्रुटावेव वा विश्राम इति विकल्पोऽभिमतः ॥ १७ ॥ समाप्तमवयवावयविप्रकरणम् ॥ ५४ ॥

अथ विश्वस्य शून्यत्वात् क्व परमाणुसम्भावनेति मतनिराकरणाय निरवयवप्रकरणं तत्र पूर्वपक्षसूत्रम्। तस्य निरवयवस्याणोरनुपपत्तिः कुतः आकाशव्यतिभेदात् अन्तर्बहिश्चाकाशसमावेशात् तथा च सावयवस्तस्मानित्य इति ॥ १८ ॥

अथ नाकाशव्यतिभेदस्तर्हि आकाशमसर्व्वगतं स्यादित्याह । स्यादिति शेषः ॥ १९ ॥

समाधत्ते । अन्तःशब्दोवहिःशब्दश्च कार्य्यद्रव्यस्यावयवविशेषवाची न चाकार्य्येऽवयवसम्भवइत्यर्थः वहिरिति दृष्टान्तार्थम् ॥ २० ॥

आकाशस्यासर्वगतत्वं स्यादित्यत्राह । शब्दस्य संयोगस्य च यो विभवः अथ वा शब्दजनकसंयोगस्य यो विभवः सार्व्वत्रिकत्वं तस्मात्पुनः सर्वगतं आकाशमिति शेषः सर्वदेशे शब्दोत्पत्त्या तज्जनकसंयोगानुमानात् सर्वमूर्त्तसंयोगित्वरूपसर्वगतत्वं तस्य सिद्धम् ॥ २१ ॥

आकाशस्य सर्वसंयोगित्वे व्यूहनविष्टम्भौ स्यातामतआह । व्यूहः प्रतिहतस्य परावर्त्तनं विष्टम्भउत्तरदेशगतिप्रतिबन्धः आकाशे तयोरभावः निस्पर्शत्वात् विभुत्वं सर्वगतत्वं यद्येते सूत्रे शून्यतावादिमते न संगच्छेते आकाशादेस्तैरनभ्युपगमात्तथापि त्वन्मत इति पूरयित्वा व्याख्येये ॥ २२ ॥

पूर्वपक्षी युक्त्यन्तरमाशङ्कते । परमाणोरिति शेषः हेतुमाह संस्थानोपपत्तेः संस्थानवत्त्वात् परमाणुर्हि परिमण्डलाकारः संस्थानवत्त्वे मानं भङ्ग्या वदति मूर्त्तिमतामिति मूर्त्तत्वात्संस्थानवत्त्वमित्यर्थः चः पूर्वोक्तहेतुं समुच्चिनोति पूर्वोक्तहेतुं समुच्चिनोतिमूर्त्तत्वस्य हेतुत्वसमुच्चयार्थो वा चकारः ॥ २३ ॥

युक्त्यन्तरमाह । अवयवसद्भावइत्यनुवर्त्तते संयोगवत्त्वादिति हेत्वर्थः संयोगवत्त्वात् कथं सावयवत्वमिति चेत् इत्थं संयोगस्याव्याप्यवृत्तित्वादव्याप्यवृत्तित्वञ्चावच्छेदकभेदं विना नोपपद्यते अवच्छेदकश्चावयव इति ननु परमाण्ववयवेऽप्ययं दोषः स्यात्तथाचानवस्थितपरम्पराप्रसङ्ग इति चेत् त्यज तर्हि परमाणुव्यसनं स्वीकुरु शून्यतावादं निरवयवमाकाशादिकमपि नास्तीति भावः ॥ २४ ॥

समाधत्ते । पूर्व्वोक्तयुक्त्या परमाणोर्निरवयवत्वप्रतिषेधोन युक्तः कुत अनवस्थाकारित्वात् प्रामाणिकोयमनवस्था स्यादतआह अनवस्थानुपपत्तेश्चेति सर्वेषामनवस्थितावयवत्वे मेरुसर्षपयोस्तुल्यपरिमाणत्वापत्तिरित्यञ्च तत्संयोगावच्छेदकादिविभागा न वा शून्यतायुक्ता निष्प्रमाणत्वात्प्र-

भावसत्त्वे शून्यत्वविरोधात् निष्प्रमाणकशून्यताऽभ्युपगमे किमपराद्धं पूर्णतयेति दिक् ॥ २५ ॥ समाप्तं निरवयवप्रकरणम् ॥ ५५ ॥

ननु वाह्यार्थाभावात् कुतोऽवयवावयविव्यवस्थेति मतमभाक्तुं वाह्यार्थभङ्गनिराकरणमारभते प्रमेयत्वं ज्ञानत्वव्याप्यं नवेति संशयः तत्र पूर्वपक्षसूत्रम्। तुः प्रकरणविच्छेदार्थः भावानां बुद्ध्या विवेचनादभेदोल्लेखात् याथात्म्यस्य ज्ञानभेदलक्षणस्यानुपलब्धिरनुपपत्तिः घट इति ज्ञानं मम जातमिति ह्यनुभूयते तत्र घट इति ज्ञान मित्यनेन ज्ञानघटयोरभेदउल्लिख्यते ततोन ज्ञानातिरिक्तो विषयः यथा पटे विविच्यमाने तन्तूनामेवापकर्षणादावतिरिक्तं न वस्तु एवं तन्तुरपि नांशुव्यतिरिक्त इति घटत्वादिस्तु ज्ञानस्यैवाकारविशेष इति भावः ॥ २६ ॥

समाधत्ते। उक्तो हेतुर्न युक्तः व्याहतत्वात् न हि बुद्ध्या विवेचने पटस्य तन्तु रूपता सिध्यति तन्तुतः पट इति हि प्रतीयते न तु तन्तुः पट इति एवं पटेन प्रावरणं न तु तन्तुभिः किञ्च तन्तुपटविवेचनादेव वाह्यार्थसिद्धिः ज्ञानेन तु स्वस्मिन् पटाभेदो नोल्लिख्यते स्वाविषयकत्वादनुव्यवसायेन तु पटविषयकत्वं व्यवसाये समुल्लिख्यते ॥ २७ ॥

ननु तन्तु पटयोर्भेदे पार्थक्येन ग्रहणं स्यादित्यत्राह। पृथग्ग्रहणं यदि तन्त्वविषयकप्रत्यक्षविषयत्वं पटस्यापाद्यते तत्रोत्तरं तदाश्रयत्वादिति पटो हि तन्त्वाश्रितः तेन सामग्रीरूपत्वात्पटप्रत्यक्षस्य तन्तु विषयकत्वं यदि च भेदप्रत्यय आपाद्यते तदा भवत्येवेति भावः ॥ २८ ॥

ननु ज्ञानस्योभयवादिसिद्धत्वात्तन्मात्र पदार्थकल्पने लाघवात्तदतिरिक्तपदार्थाभावसिद्धिः स्यादित्यत आह। पूर्वोक्तहेतुं समुच्चिनोति चकारः अर्थस्य घटादेः प्रतिपत्तेः प्रमाणाधीनत्वात् तथा च प्रामाणिकेऽर्थे गौरवं न बाधकमिति भावः अन्यथा ज्ञानमपि न सिध्येद्गौरवादि शून्यतापत्तिः ॥ २९ ॥

न वा वाह्यार्थाभावसाधनं सम्भवतीत्याह। व्याघातात्र वाह्याभाव इति शेषः वाह्यं नास्तीत्यत्र यदि प्रमाणमस्ति तदा प्रमाणस्य वाह्यस्य सत्त्वान्न वाह्याभावः अथ नास्ति तदा निष्प्रमाणकत्वान्न तत्सिद्धिरित्यर्थः किञ्च घटादौ यदि प्रमाणमस्ति तदा तत एव वाह्यार्थसिद्धिः अथा प्रमाणं

तदा कथं घट इति ज्ञानस्य घटाकारत्वं मन्यसे ज्ञानस्यैवानुत्पत्तेरिति ॥३०॥

ननु प्रमाणप्रमेयव्यवहारो न पारमार्थिकः परन्तु विज्ञानानि तत्तदाकाराणि वासनापरिपाकवशादेव स्वप्नप्रत्ययवदैन्द्रजालिकप्रतीतिवच्चाविर्भवन्तीत्याशयेन शङ्कते सूत्राभ्यां स्पष्टम् ॥ ३१ ॥ ३२ ॥

समाधत्ते । वाह्याभावस्यासिद्धिः हेत्वभावात् प्रमाणाभावात् अथवा हेतोश्चक्षुरादेरनभ्युपगमे घटोऽयमित्यादिज्ञानानामसिद्धिरित्यर्थः न च वासनावशात्तस्यादिति वाच्यं वासनाया अतिरिक्तत्वेवाह्योपगमप्रसङ्गात् वासनायाः सन्तन्यमानतया चाक्षुषादेरपि सन्तानापत्तिरिति दिक् ॥ ३३ ॥

नन्वसद्विषया अहेतुका अपि स्वप्नप्रत्ययादव भावना प्रत्यया इव परेऽपि प्रत्ययाभवेयुरित्यत आह । पूर्व्वोपलब्धविषय इति शेषः सङ्कल्पउपनीतभानं यथा स्मृत्यादिः पूर्व्वोपलब्धविषयकः तथा स्वप्नप्रत्ययोऽपीति न निर्व्विषयकः न च स्वप्ने स्वमपि खादति निजशिरः खण्डनमपि पश्यति नत्विदं पूर्व्वोपलब्धमिति वाच्यं स्वस्य खादनस्य च निजशिरसः खण्डनस्य च पूर्व्वोपलब्धत्वात्संसर्गभानस्य च भ्रान्तत्वात् नवाऽहेतुकत्वं स्मृत्यादिदृष्टान्तेन संस्कारस्य स्मृतेश्च स्मृतौ विशिष्ट बुद्धौ च हेतुत्वस्याभिमतत्वात् तत्र भ्रमे दोषः कालविशेषोऽदृष्टविशेषोद्दोधोवेत्यन्यदेतत् ॥३४॥

ननु भ्रमस्यापि सद्विषयकत्वे तत्प्रतिरोधः कथं स्यादित्याशङ्क्याह । मिथ्योपलब्धेर्मायागन्धर्वनगरादिज्ञानस्य तत्त्वज्ञानादनारोपितवस्तुप्रत्ययाद्विनाशः प्रतिरोधः भ्रमत्वज्ञानं वा एवं स्वप्नप्रत्ययस्यापि दर्पणमुखविभ्रमस्य तत्त्वज्ञानेनाप्रतिरोधेऽपि भ्रमत्वज्ञानं भवत्येवेति भावः ॥ ३५ ॥

माध्यमिकस्तु वाह्यासत्त्वं प्रसाध्यते तद्दृष्टान्तेन बुद्धेरप्य सत्त्वं साधयति तं प्रत्याह । एवं वाह्यवद्बुद्धेरपि न प्रतिषेधः निमित्तसद्भावोपलम्भात् सहेतुकत्वस्य प्रमितत्वात् नह्यलीकं सहेतुकं सम्भवति अहेतुकत्वे च कादाचित्कत्वव्याकोपः केचित्तु भ्रमस्य सद्विषयत्वे प्रमात्वं स्यादित्यत्राहुः बुद्धेरिति एवं प्रमात्वं निमित्तस्य प्रकारस्य सद्भावः सत्त्वं यत्र तथा च शुक्तिरजतयोः सत्यत्वेऽपि शुक्तौ रजतत्ववैशिष्ट्याभावान्न तद्बुद्धे प्रमात्वमिति भाव इत्याहुः अत्र चोपलम्भ पदमनतिप्रयोजनकम् ॥ ३६ ॥

न वा मिथ्याबुद्धिदृष्टान्तेन ज्ञानमात्रस्यासन्मात्रविषयकत्वं सद्विषयकत्वाभावो वा सम्भवतीत्याह । तत्त्वं धर्म्मिस्वरूप प्रधानं आरोप्यं तथाच भ्रमे धर्म्यंशे प्रमात्वमारोप्यरजतत्वाद्यंशे च भ्रमत्वमिति दृष्टान्तासिद्धिरिति भावः केचित्तु प्रमात्वाप्रमा त्वयोर्विरोधान्नैकत्र समावेश इत्यत आह तत्त्वेति तथा च विषयभेदान्न विरोध इति भावः इत्याहुः ॥ ३७ ॥

समाप्तं वाह्यार्थभङ्गनिराकरणप्रकरणम् ॥ ५६ ॥

ननु शास्त्राधीनं तत्त्वज्ञानं क्षणिकमतस्तन्नाशे मिथ्याज्ञानं स्यादेव नहि तादृशं किञ्चिदेव ज्ञानं दृढभूमिसवासनमिथ्याज्ञानसमुन्मूलनक्षमम- तस्तत्त्वज्ञानविवृद्धिप्रकरणमारभते तत्त्वज्ञानविवृद्धिस्तत्त्वज्ञानवासना ततश्चात्यन्तिकोमिथ्याज्ञान नाशः तत्र तत्त्वज्ञानविवृद्धौ हेतुमाह । समाधिः चित्तस्याभिमतविषयनिष्ठत्वं तस्य प्रकर्षोविषयान्तरानभिष्वङ्गलक्षणस्तस्या- भ्यासात् पौनःपुन्यात् तत्त्वज्ञान विवृद्धिः तदेव च निदिध्यासनमामनन्ति तत्त्वज्ञानविवृद्ध्या च मिथ्याज्ञानवासनातिरोभावस्तथा च योगसूत्रं तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी प्रतिबन्धः कार्य्याक्षमतासम्पादन विनाशोवा ॥ ३८ ॥

ननु रागादिभिः प्रतिबन्धात् समाधिरेव नोदेतीत्याक्षिपति सूत्राभ्याम् । अर्थविशेषस्य तनयवनितादिरागस्य प्राबल्याच्चिरकालानुबन्धात्तदनुसन्धानमवर्ज्जनीयमिति तदभावः स्याच्च घनगर्जितादिज्ञानेन प्रतिबन्धः एवं क्षुत्तृष्णाभयादिभिः प्रतिरुद्ध स्तदुपशमाय प्रयतेत ॥ ३९ ॥ ४० ॥

परिहरति । जन्मान्तरकृतसमाधिजन्यसंस्कारवशात् समाधिसिद्धिरित्यर्थः अतएव चानेकजन्मसंसिद्ध इत्यादि सङ्गच्छते वयन्तु पूर्वकृतस्य प्रथमतः कृतस्येश्वराराधनस्य फलं धर्मविशेषस्तत्सम्बन्धादित्यर्थः तथा च योगसूत्रं समाधिसिद्धिरीश्वरप्रणिधानात् सूत्रान्तरञ्च तत्रैव ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च तत्र ईश्वरप्रणिधानात् विषयप्रातिकूल्येन चित्तावस्थानं प्रत्यूहाभावश्चेत्यर्थः ॥ ४१ ॥

योगाभ्यासस्थानमुपदिशति । तत्र स्थिरचित्तता स्यादिति भावः इदं न सूत्रं भाष्यमिति केचित् ॥४२ ॥

तदस्य शङ्कते। एवं प्रसङ्गः अर्थविशेषप्राबल्याद्विषयावभासप्रसङ्गः॥४३॥

समाधत्ते। निष्पन्नस्य शरीरादेः अवश्यम्भावित्वात् कारणत्वात् ज्ञानादिष्विति शेषः॥ ४४॥

ननु किमेतावतेत्यत आह। तस्य शरीरादेरभावः तदारम्भकधर्म्माधर्म्मविरहादिति भावः॥ ४५॥

ननु समाधिमात्रादेव निष्प्रत्यूहोऽपवर्गः स्यात् साधनान्तरं वाऽपेक्षणीयमत आह यद्वा समाधिसाधनान्याह। तदर्थमपवर्गार्थमिति भाष्यादौ तदर्थं समाध्यर्थमिति वा यमानाह योगसूत्रं अहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रहा यमाः नियमानाह शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः स्वाध्यायः स्वाभिमतमन्त्रजपः निषिद्धानाचरणतत्तदाश्रमविहिताचरणे यमनियमा इत्यन्ये आत्मसंस्कारः आत्मनोऽपवर्गाधिगमसक्षमता ननु यमनियम एव साधने उताहो अन्यदस्तीत्यत आह योगादिति आत्मविधिः आत्मसाक्षात्कारविधायकवाक्यं आत्मा वा अरे द्रष्टव्य आत्मानं चेद्विजानीयादित्यादि योगादिति प्रतिपाद्यत्वं पञ्चम्यर्थः तथाच योगशास्त्रोक्तात्मतत्वाधिगमसाधनैस्त्वात्मसंस्कारः कर्त्तव्य इत्यर्थः तथाच योगसूत्रं योगसूत्रं योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिरा विवेकख्यातेः तदर्थञ्च योगाङ्गानां यमनियमादीनां अनुष्ठानाच्चित्तस्याशुद्धेरविद्यादिरूपस्य क्षये सति ज्ञानस्य दीप्तिः प्रकर्षः स च विवेकख्यातिपर्य्यन्तो जायते सा च सत्त्वपुरुषान्यतासाक्षात्कारः अस्मन्मते तु देहादिभिन्नात्मसाक्षात्कारः स च नेदानीमविद्याप्रतिबन्धाद्देहात्मनोर्म्मनश्चक्षुराद्ययोग्यत्वाच्च भवति चासौ योगजधर्म्मात् योगाङ्गानि तत्रोक्तानि यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि आसनं पद्मासनादि कुशासनादि च चैलाजिनकुशोत्तरमिति भगवद्वचनात् प्राणायाममाह योगसूत्रं तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः तस्मिन् आसनस्थैर्य्ये प्राणवायोरेव निर्गमप्रवेशरूपक्रियाविशेषात् श्वासप्रश्वासव्यपदेशः बहिरिन्द्रियाणां स्वस्वविषयवैमुख्येनावस्थानं प्रत्याहारः धारणामाह योगसूत्रं देशबन्धश्चित्तस्य धारणा देशे नाभिचक्रादौ चित्तस्य बाह्यविषयान्तरवैमुख्येनावस्थानं ध्यानमाह तत्रप्रत्ययैकतानताध्यानं धारणैव धारावा-

ह्निनी ध्यानमित्यर्थः समाधिमाह तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः अर्थस्य धर्म्मो ज्ञानस्वरूपञ्च यदि ध्याने न भासते तदा समाधिरित्यर्थः सूत्रान्तरं त्रयमन्तरङ्गं पूर्व्वेभ्यः चरमत्रयं साक्षादुपकारकमित्यर्थः ॥४६

नन्वेवं किमान्वीक्षिकयेत्यत आह। तदर्थमित्यनुवर्त्तते ज्ञायतेऽनेनेति ज्ञानं शास्त्रं प्रकृतं तस्य ग्रहणमध्ययनधारणे तत्राभ्यासो दृढतरसंस्कारः तद्विद्यैस्तदभियुक्तैः संवादः स्वानुभवदार्ढ्याय न हि योगाङ्गज्ञानाय तत्सापेक्षत्वेन न प्रकृतशास्त्रवैफल्यं ध्येयस्वरूपवैलक्षण्यात् ॥ ४७ ॥

संवादप्रकारं वा दर्शयितुमाह। तं तद्विद्यं सब्रह्मचारी सहाध्यायो विशिष्टः प्रकृष्टज्ञानवान् श्रेयोऽर्थी मुमुक्षुः विशिष्टः पूर्व्वोक्तमिव इत्यर्थः इति कश्चित् विजिगीषुव्यावृत्त्यर्थं अनसूयिभिरिति ॥ ४८ ॥

संवादप्रकारमाह। वाशब्दो निश्चयार्थः अर्थित्वे तत्त्वबुभुत्सायां सत्यां प्रयोजनार्थं तत्त्वनिर्णयार्थं प्रतिपक्षहीनं प्रतिकूलपक्षहीनं यथा स्यात्तथाऽभ्युपेयात् तथा च भाष्यं स्वपक्षमनवस्थाप्य स्वदर्शनं परिशोधयेदिति तत्त्वनिर्णीषुतया न पक्षपात इति भावः ॥ ४६ ॥

समाप्तं तत्त्वज्ञानविवृद्धिप्रकरणम् ॥ ५७ ॥

तद्विद्यैः सह संवाद इत्यत्र त्रयीवाह्यैः सह संवादः कर्त्तव्य इति भ्रमो माभूदिति तत्त्वज्ञानपरिपालनप्रकरणमारभते। तत्त्वाध्यवसायस्य तत्त्वनिर्णयस्य संरक्षणं परोक्तदूषणास्कन्दनेनाप्रामाण्यशङ्काविघटनं तदर्थं जल्पवितण्डे पूर्व्वमुक्ते इति शेषः ॥ ५० ॥

## ताभ्यां विगृह्य कथनं ॥ क ॥

ननु ताभ्यां किङ्कार्य्यमित्यत आह। अयमर्थः त्रयीवाह्यैः तद्दर्शनाभ्यासाहितकुज्ञानैरपरैर्व्वा यदि स्वपक्ष आक्षिप्यते तदा ताभ्यां जल्पवितण्डाभ्यां सावधारणं चैतत् त्रय्यऽन्तःपातिनामाक्षेपे तु वादजल्पवितण्डाभिर्ययेच्छङ्कथयेदिति भावः वस्तुतस्तु मुमुक्षोर्न तादृशैः सह संवादो वीतरागत्वान्नहि शास्त्रपरिपालनमपि तदुद्देश्यं नवा तदुपेक्ष्यैव शास्त्रं गच्छति किन्तु शास्त्रमभ्दस्येतेति तत्त्वमिति ॥ क ॥

समाप्तं तत्त्वज्ञानपरिपालनप्रकरणम् ॥ ५८ ॥

समाप्तं चतुर्थाध्यायस्य द्वितीयमाह्निकम् ॥ २ ॥

इति महामहोपाध्यायश्रीमद्विद्यानिवासभट्टाचार्य्यात्मज श्रीविश्वनाथ सिद्धान्तपञ्चाननभट्टाचार्य्यकृतायां न्यायसूत्रवृत्तौ चतुर्थोऽध्यायः ॥ ४ ॥

---

नत्वा शङ्करचरणं शरणं दीनस्य दुर्गमे तरणम्।
सम्प्रति निरूपयामः पञ्चममध्यायमतिगहनम्।

अथ जातिनिग्रहस्थानयोरुद्दिष्टयोर्लक्षितयोर्बहुत्वं तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वमित्यनेन सूचितं बलवच्छिष्यजिज्ञासानुसारिप्रमाणादिपरीक्षयाऽन्तरितं सम्प्रत्यवसरतः प्रपञ्चनीयं तत्र जातिपरीक्षासहितजातिनिग्रहस्थानविशेषलक्षणमध्यायार्थः जातिपरीक्षासहितजातिविशेषलक्षणं प्रथमाह्निकार्थः सप्तदश चात्र प्रकरणानि तत्रादौ सत्प्रतिपक्षदेशनाभासप्रकरणम् अन्यानि च यथास्थानं वक्ष्यन्ते तत्र च विशेषलक्षणार्थं जातिं विभजते।

अत्र च साधर्म्यादीनां कार्य्यान्तानां द्वन्द्वे तैः समा इत्यर्थात् साधर्म्यसमादयश्चतुर्विंशतिजातय इत्यर्थः अत्र च जातेर्विशेष्यत्वात् समाशब्दं मन्यन्ते भाष्यवार्त्तिकादौ समाशब्दः अग्रिमसूत्रेषु तु समशब्दो निर्विवाद एव तत्र जातिशब्दस्य स्त्रीलिङ्गतया यद्यपि नान्वयस्तथापि प्रतिषेधो विशेष्य इति भाष्यादयः वयन्तु तद्विकल्पादिति सूत्रस्यविकल्पस्यैव विशेष्यत्वं विविधः कल्पः प्रकारो विकल्पः तथा चैते साधर्म्यसमादयोजातिविकल्पा एवमग्रिमसूत्रेष्वपि इत्यस्तु जातेर्विशेष्यत्वे साधर्म्यसमेत्यपीति ब्रूमः समीकरणार्थं प्रयोगः सम इति वार्त्तिकं यद्यपि नैतावतासमीकरणं तथापि समीकरणोद्देश्यकत्वमस्त्येव अथवा साधर्म्यमेव समं यत्र स साधर्म्यसमः एकत्रव्याप्तेराधिक्येऽपि साधर्म्यं सममेवेति भावः ॥ १ ॥

साधर्म्यवैधर्म्यसमौ लक्षयति। उपसंहारे साध्यस्योपसंहरणे वादिना कृते तद्धर्मस्य साध्यरूपधर्मस्य यो विपर्य्ययो व्यतिरेकस्तस्य साधर्म्यवैधर्म्याभ्यां केवलाभ्यां व्याप्त्यनपेक्षाभ्यां यदुपपादनं ततो हेतोः साधर्म्यवैधर्म्यसमावुच्येते तदयमर्थः वादिना अन्वयेन व्यतिरेकेण वा साध्ये साधिते प्रतिवादिनः साधर्म्यमात्रप्रवृत्तहेतुना तदभावापादनं साधर्म्यसमावैधर्म्यमात्र-

प्रवृत्तहेतुना तदभावापादनं वैधर्म्यसमा तत्र साधर्म्यसमा यथा शब्दोऽनित्यः कृतकत्वाद्घटवत् व्यतिरेकेण वा व्योमवदित्युपसंहृते नैतदेवं यद्यनित्यघट-साधर्म्यान्नित्याकाशवैधर्म्याद्वाऽनित्यः स्यान्नित्याकाशसाधर्म्यादमूर्त्तत्वान्नित्यः स्याद्विशेषो वा वक्तव्यः वैधर्म्यसमा यथा शब्दोऽनित्यः कृतकत्वाद्घटवत् आ-काशवद्वेति स्थापनायाम् अनित्यघटवैधर्म्यादमूर्त्तत्वान्नित्यः स्याद्विशेषो वा वक्तव्य इति अत्र साधर्म्यत्वमात्रं वैधर्म्यत्वमात्रं वा गमकतौपयिकमित्यभि-मानात् सत्प्रतिपक्षदेशनाभासे चेमे अनैकान्तिकदेशनाभासेति वार्त्तिके त्वनैकान्तिकपदं योगात्सत्प्रतिपक्षपरं एकान्ततः साध्यसाधकत्वाभा-वात् ॥ २ ॥

अनयोरसदुत्तरत्वे वीजमाह । गोत्वात् गोसिद्धिर्गोव्यवहार इति सम्प्रदायः वयन्तु गोत्वान्नेतरासमवेतत्वे सति गोसमवेतात्सास्नादितः एतेन व्याप्तिपक्षधर्म्मत्वे दर्शिते गोगोत्वस्य तादात्म्येन गोरेव वा सिद्धिर्यया तथैव कृतकत्वादपि व्याप्तिपक्षधर्म्मतासहितादनित्यत्वसिद्धिर्न तु व्याप्तिपक्ष-धर्म्मतारहितात् साधर्म्यमात्रात् तथा सति अदूषकसाधर्म्यात्प्रमेयत्वादित-स्तद्वचनमप्यदूषकं स्यादित्ययं विशेषः ॥ ३ ॥

इति सत्प्रतिपक्षदेशनाभासप्रकरणम् ॥ ५८ ॥

क्रमप्राप्तं जातिषट्कं निरूपयति । उत्कर्षेण सम उत्कर्षसम एवमप-कर्षसमोऽपि वर्ण्यावर्ण्यसाध्येति भावप्रधानो निर्देशः वर्ण्यत्वादिना समो वर्ण्यसमादिः अविद्यमानधर्म्मारोप उत्कर्षः विद्यमानधर्म्मापचयोऽपकर्षः वर्ण्यत्वं वर्णनीयत्वं तच्च सन्दिग्धसाध्यकत्वादि तदभावेऽवर्ण्यत्वं विकल्पो-द्वैविध्यं साध्यत्वं पञ्चावयवसाधनीयत्वं साध्यदृष्टान्तयोधर्मविकल्पादिति पञ्चानामुत्थानवीजं उभयसाध्यत्वादिति षष्ठस्य तदयमर्थः साध्यतेऽनेनेति साध्यं पक्षः तथा च साध्यदृष्टान्तयोरित्यस्य पक्षदृष्टान्तयोरन्यतरस्मि-न्नित्यर्थः धर्मविकल्पो धर्म्मस्य वैचित्र्यं तच्च क्वचित्सत्त्वं क्वचिदसत्त्वं प्रकृते साध्यसाधनान्यतररूपस्य धर्मस्य विकल्पात्सत्त्वाद्योऽविद्यमानधर्म्मारोपः स उत्कर्षसमः व्याप्तिमपुरस्कृत्य पक्षदृष्टान्तान्यतरस्मिन् साध्यसाधनान्य-तरेणाविद्यमानधर्मप्रसञ्जनं उत्कर्षसम इति फलितार्थः यथा शब्दोऽनित्यः कृतकत्वादिति स्थापनायां अनित्यत्वं कृतकत्वं घटे रूपसहचरितमतः

शब्दोऽपि रूपवान् स्यात् तथा च विवक्षितविपरीतसाधनाद्विशेषविरुद्धो हेतुस्तद्देशनाभासाचेयम् एवं श्रावणशब्दसाधर्म्यात्कृतकत्वाद्घटोऽपि श्रावणः स्यादविशेषात् वस्तुतस्तु घटे श्रावणत्वापादनेऽर्थान्तरमत उक्तलक्षणे दृष्टान्तपदं साध्यपदञ्च न देयम् अपकर्षसमायान्तु धर्मविकल्पः धर्मस्य सहचरितधर्मस्य विकल्पोऽसत्त्वं ततः अपकर्षः साध्यसाधनान्यतरस्याभावप्रसञ्जनं तथा च पक्षदृष्टान्तान्यतरस्मिन् व्याप्तिमपुरस्कृत्य सहचरितधर्माभावेन हेतुसाध्यान्यतराभाव प्रसञ्जनमपकर्षसमा यथाशब्दोऽनित्यः कृतकत्वादित्यत्र यद्यनित्यसहचरितघटधर्मात् कृतकत्वादनित्यः शब्दस्तदा कृतकत्वानित्यत्वसहचरितघटधर्मरूपवत्त्वव्यावृत्त्या शब्दे कृतकत्वस्यानित्यत्वस्य च व्यावृत्तिः स्यात् आद्येऽसिद्धिदेशना द्वितीये बाधदेशना एवं शब्दे कृतकत्वसहचरितश्रावणत्वस्य संयोगाद्यनित्यत्वकृतकत्वसहचरितगुणत्वस्य च व्यावृत्त्या घटेऽनित्यत्वं कृतकत्वञ्च व्यावर्त्तेतेति दृष्टान्ते साध्यसाधनवैकल्यदेशनाभासोऽपीयं यत्तु वार्त्तिके शब्दो नीरूप इति घटोऽपि नीरूपः स्यादित्यपकर्ष इति तदसत् घटे नीरूपत्वापादनस्यार्थान्तरत्वात् आचार्य्यस्वरसोऽप्येवं यत्तु वैधर्म्यसमाया अत्रैवान्तर्भावः स्यादिति तन्न उपधेयसङ्करेऽप्युपाधेरसङ्करात् वर्ण्यसमायान्तु साध्यः सिद्धभाववान् सन्दिग्धसाध्यकादिर्वा तस्य धर्मः सन्दिग्धसाध्यकादिवृत्तिहेतुस्तस्य विकल्पात् स्यात् दृष्टान्ते वर्ण्यत्वस्य सन्दिग्धसाध्यकत्वस्यापादनं वर्ण्यसमा तदयमर्थः पक्षवृत्तिहेतुर्हि गमकः पक्षश्च सन्दिग्धसाध्यकस्तथा च सन्दिग्धसाध्यकवृत्तिर्हेतुस्त्वया दृष्टान्तेऽपि स्वीकार्य्यः तथा च दृष्टान्तस्यापि सन्दिग्धसाध्यकत्वात् सपक्षवृत्तित्वानिश्चयादसाधारणो हेतुस्तद्देशनाभासा चेयं हेतुः सन्दिग्धसाध्यकवृत्तिर्यदि न दृष्टान्ते तदा गमकहेत्वभावात् साधनविकलो दृष्टान्तः स्यादिति भावः अवर्ण्यसमायान्तु दृष्टान्ते सिद्धसाध्यके यो धर्मो हेतुस्तस्य रूपं स्यात् पक्षे शब्दादावसन्दिग्धसाध्यकत्वापादनमवर्ण्यसमा दृष्टान्ते हेतोर्यादृशत्वं तादृशो हेतुरेव गमक इत्यभिमानेन एवमापादनं दृष्टान्ते यो हेतुः सिद्धसाध्यकवृत्तिः स चेन्न पक्षे तदा गमकहेत्वभावात् स्वरूपासिद्धिः स्यादतस्तादृशो हेतुरवश्यं पक्षत्वाभिमते स्वीकार्य्यः तथा च सन्दिग्धसाध्यकत्वलक्षणपक्षत्वाभावादाश्रयासिद्धिः असिद्धिदेशना-

भासा चेयं विकल्पसमायामु पक्षे दृष्टान्ते च योधर्मस्तस्य विकल्पोविरुद्धः कल्पो व्यभिचारित्वम् उपलक्षणं चैतत् अन्यवृत्तिधर्मस्यापि बोध्यं व्यभिचारोऽपि हेतोर्धर्मान्तरं प्रति धर्मान्तरस्य साध्यं प्रति धर्मान्तरस्य धर्मान्तरं प्रति वा तथा च कस्यचिद्धर्मस्य क्वचिद्व्यभिचारदर्शनेन धर्मत्वाविशेषात् प्रकृतहेतोः प्रकृतसाध्यं प्रति व्यभिचारापादनं विकल्पसमा यथा शब्दोऽनित्यः कृतकत्वादित्यत्र कृतकत्वस्य गुरुत्वव्यभिचारदर्शनात् कृतत्वस्यानित्यत्वव्यभिचारदर्शनादनित्यत्वस्य मूर्त्तत्वव्यभिचारदर्शनान्मूर्त्तत्वादिविशेषात् कृतकत्वमप्यनित्यत्वं व्यभिचरेदित्यनैकान्तिकदेशनाभासा चेयं पक्षदृष्टान्तादेः प्रकृतसाध्यतुल्यतापादनं साध्यसमा तत्रायमाशयः एतत्प्रयोगसाध्यस्यैवानुमितिविषयत्वं तथा च पक्षादेरनुमितिविषयत्वात् साध्यवदेतत्प्रयोगसाध्यत्वम् अतः साध्यसमा तथा हि पक्षादेः पूर्वं सिद्धत्वे एतत्प्रयोगसाध्यत्वाभावान्नानुमितिविषयत्वं पूर्वमसिद्धत्वे पक्षादेरज्ञानादाश्रया सिद्ध्यादयस्तद्देशनाभासा चेयं सूत्रार्थस्तु उभयसाध्यत्वात् उभयं पक्षदृष्टान्तौ तद्धर्मौ हेत्वादिः तत्साध्यत्वं तदधीनानुमितिविषयत्वं साध्यस्येव पक्षादेरपीति तुल्यतापादनमिति लिङ्गोपहितभानमते लिङ्गस्याप्यनुमितिविषयत्वात् साध्यसमत्वं हेतोश्च साध्यत्वे हेतुमान्दृष्टान्तोऽपि साध्य इत्याशयः ॥ ४ ॥

एतासामसदुत्तरत्वे बीजमाह । किञ्चित्साधर्म्यात् साधर्म्यविशेषात् व्याप्तिसहितात् उपसंहारसिद्धेः साध्यसिद्धेः वैधर्म्यादेतद्विपरीतात् व्याप्तिनिरपेक्षात् साधर्म्यमात्रात् भवता कृतः प्रतिषेधो न सम्भवतीत्यर्थः अन्यथा प्रमेयत्वरूपासाधकसाधर्म्यात् तद्दूषणमप्यसम्यक् स्यादिति भावः तथा चायं क्रमः अनित्यत्वव्याप्यात् कृतकत्वात् शब्देऽनित्यत्वमुपसंहरामो न तु कृतकत्वं रूपस्यापि व्याप्यं येन ततो रूपमध्यारोपणीयं शब्दे एवं अनित्यत्वं न रूपव्याप्यं येन रूपाभावादनित्यत्वाभावः शब्दे स्यात् एवं वर्ण्यसमेऽपि किञ्चित्साधर्म्यात् व्याप्यतावच्छेदकावच्छिन्नाद्धेतोः साध्यसिद्धिः तादृशहेतुमत्त्वञ्च दृष्टान्तताप्रयोजकं न तु पक्षे यावद्विशेषणावच्छिन्नो हेतुस्तावदवच्छिन्नहेतुमत्त्वं अन्यथा त्वयाऽपि दूषणोयो दृष्टान्तो कर्त्तव्यः सोऽपि न स्यात् एवमवर्ण्यसमेऽपि व्याप्यतावच्छेदकावच्छि-

दृष्टान्तदृष्टस्य पक्षे सत्त्वात् साध्यसिद्धिर्न तु दृष्टान्तदृष्टक्रियावद्धर्मावच्छिन्नस्य पक्षे सत्त्वम् एवं निकर्षसमेऽपि प्रकृतसाध्यव्याप्यात् प्रकृतहेतोः साध्यसिद्धिस्तद्धर्म्यात् यत्किञ्चिद्व्यभिचारात् अतः प्रतिषेधो न सम्भवति नहि यत्किञ्चिद्व्यभिचारादेव प्रकृतहेतोः प्रकृतसाध्यासाधकत्वमतिप्रसङ्गात् एवं साध्यसमेऽपि व्याप्याद्धेतोः सिद्धे पक्षे साध्यसिद्धिर्न तु पक्षदृष्टान्तादयोऽप्यनेन साध्यन्ते तथा सति क्वचिदपि साध्यसिद्धिर्न स्यात् त्वदीयदूषणमपि विलीयेत ॥ ५ ॥

वर्ण्यावर्ण्यसाध्यसमानां समाधानान्तरमप्याह । दृष्टान्तोपपत्तिर्दृष्टान्ततोपपत्तिः साध्यातिदेशात् दृष्टान्ते हि साध्यमतिदिश्यते तावतैव दृष्टान्तत्वमुपपद्यते नत्वशेषो धर्मः पक्षदृष्टान्तयोरभेदापत्तेः पक्षादेरपि साध्यत्वमत्वपैतेन प्रत्युक्तं दृष्टोऽन्तो दृष्टान्तः पक्षः तस्मादृक्षिमानित्यतः पक्षोत्कीर्त्तनात्तथा च साध्यस्यातिदेशात् साधनात् पक्षे इत्युच्यते न तु पक्षोऽपि साध्यतेऽतिप्रसङ्गादिति भावः ॥ ६ ॥

समाप्तं जातिषट्कप्रकरणम् ॥ ६ ॥

क्रमप्राप्तौ प्राप्त्यप्राप्तिसमौ लक्षयति । हेतोरिति साधकत्वमिति शेषः प्राप्तिपक्षे दोषमाह प्राप्त्याऽविशिष्टत्वादिति द्वयोरपि प्राप्तत्वाविशेषात् किञ्चस्य साधकं अप्राप्तिपक्षे दोषमाह अप्राप्तेति अप्राप्तस्य साधकत्वेऽतिप्रसङ्गात् साधकत्वञ्चात्र कारकज्ञापकसाधारणम् एवञ्च कारकज्ञापकलक्षणं साधनं कार्यज्ञाप्यलक्षणेन साध्येन सम्बद्धं सत्साधकं चेत्तदा सत्त्वाविशेषान्न कार्यकारणभावः तत्सम्बन्धस्य प्रागेव ज्ञातत्वान्न ज्ञाप्यज्ञापकभावः प्राप्तयोर्न जन्यजनकभावः प्राप्तत्वेन लवणोदकयोरिवाभेदादित्याशय इत्यन्ये तथा च प्राप्त्याऽविशेषादनिष्टापादनेन प्रत्यवस्थानं प्राप्तिसमा यदि चाप्राप्तं लिङ्गं साध्यबुद्धिं जनयति साध्याभावबुद्धिमेव किन्नेन न जनयेत् अप्राप्तत्वाविशेषात् तथा चाप्राप्त्या साधकत्वादनिष्टापादनमप्राप्तिसमा प्रतिकूलतर्कदेशनाभासे चेमे ॥ ७ ॥

अनयोरसदुत्तरत्वे बीजमाह । दण्डादितो घटादिनिष्पत्तेर्दर्शनात् सर्वलोकप्रत्यक्षसिद्धत्वादभिचारात् श्येनादितः शत्रुपीडने च व्यभिचारान्न त्वदुक्तः प्रतिषेधः सम्भवति न हि कारणं दण्डादि प्रागेव घटा-

दिना सम्बद्धमपि तु खदादिना श्येनादिरप्युद्देश्यतया पीडां जनयति अन्यथा लोकवेदसिद्धकार्यकारणभावोच्छेदे त्वदुक्तो हेतुरप्यसाधकं स्यादिति ॥ ८ ॥ प्राप्त्यप्राप्तिसमजातिद्वयप्रकरणम् ॥ ६१ ॥

क्रमप्राप्ते प्रसङ्गप्रतिदृष्टान्तसमे जाती लक्षयति। दृष्टान्तस्य कारणं प्रमाणं तदनपदेशोऽनभिधानम् अभिधानं चानतिप्रयोजनकं तथा च दृष्टान्तस्य साध्यवत्त्वे प्रमाणाभावात् प्रत्यवस्थानमर्थः यद्यपीदं सदुत्तरमेव तथापि दृष्टान्ते प्रमाणं वाच्यं तत्रापि प्रमाणान्तरमित्यनवस्थया प्रत्यवस्थाने तात्पर्यं तदुक्तमाचार्यैरनवस्थाभासप्रसङ्गः प्रसङ्गसम इति एतन्मते हेतोर्हेत्वन्तरमित्यनवस्थाऽपि प्रसङ्गसम एव पूर्वमते तु हेत्वनवस्थादिकं वक्ष्यमाणाकृतिगणेष्वन्तर्भूतमिति विशेषः अनवस्थादेशनाभासा चेयं प्रतिदृष्टान्तसमः प्रत्येतव्यः प्रतिदृष्टान्तेन प्रत्यवस्थानात् प्रतिदृष्टान्तसमः एतच्च सावधारणं तेन प्रतिदृष्टान्तमात्रबलेन प्रत्यवस्थानामर्थः तेन साधर्म्यसमाव्युदासः यदि घटदृष्टान्तबलेनानित्यः शब्दः तदाकाशदृष्टान्तबलेनानित्यः शब्दः तदाकाशदृष्टान्तबलेन नित्य एव स्यात् नित्यः किं न स्यादिति बाधः प्रतिरोधो वापादनीयः हेतुरनङ्गं दृष्टान्तमात्रबलादेव साध्यसिद्धिरित्यभिमानः बाधप्रतिरोधान्यतरदेशनाभासा चेयम् ॥ ९ ॥

प्रसङ्गसमे प्रत्युत्तरमाह। दृष्टान्तो हि निदर्शनस्थानत्वेन साध्यनिश्चयार्थमपेक्ष्यते न तु दृष्टान्तादृष्टान्ताद्यनवस्थितपरम्परा लोकसिद्धा युक्तिसिद्धा वा अन्यथा घटादिप्रत्यक्षाय प्रदीप इव प्रदीपप्रत्ययार्थमनवस्थितप्रदीपपरम्परा प्रसज्येत त्वदीयसाधनमपि व्याहन्येत ॥ १० ॥

प्रतिदृष्टान्तसमे प्रत्युत्तरमाह। अत्रायमुत्तरक्रमः प्रतिदृष्टान्तस्त्वया किमर्थमुपादीयते मदीयहेतोर्बाधार्थं सत्प्रतिपक्षितत्वार्थं वा नाद्यः यतः प्रतिदृष्टान्तस्य हेतुत्वे स्वार्थसाधकत्वे मदीयो दृष्टान्तो नाहेतुः नासाधकस्तथा च तुल्यबलत्वान्न बाधः न वा द्वितीयोऽपि यतः प्रतिदृष्टान्तस्य स्वार्थसाधकत्वे उच्यमाने नाहेतुर्दृष्टान्तः मदीयो दृष्टान्तस्तु सहेतुकत्वादधिकबलः वस्तुतो हेतुं विना दृष्टान्तमात्रेण न सत्प्रतिपक्षसम्भा-

बना तदभावव्याप्यवत्ताज्ञानाभावात् हेतूपादाने तु सदुत्तरत्वमेवेति भावः इति ॥ ११ ॥ इति प्रसङ्गसमप्रतिदृष्टान्तसमप्रकरणम् ॥६२॥

क्रमप्राप्तमनुत्पत्तिसमं लक्षयति । प्रागुत्पत्तेरिति साधनाङ्गस्येति शेषः कारणाभावात् हेत्वभावात् तथा च साधनाङ्गपक्षहेतुदृष्टान्ताना-मुत्पत्तेः प्राक् हेत्वभाव इत्यनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमः यथा घटो रूपवान् गन्धात् पटवदित्युक्ते घटोत्पत्तेर्गन्धोत्पत्तेश्च पूर्वं हेत्वभावादसिद्धिः पटे च गन्धोत्पत्तेः पूर्वं हेत्वभावेन दृष्टान्तासिद्धिः एवं आद्यक्षणे रूपा-भावाद्बाधश्च अनुत्पत्त्या प्रत्यवस्थानस्य तत्रापि सत्त्वात् उत्पत्तेः पूर्व्वं हेत्वा-द्यभावेन प्रत्यवस्थानस्यैव लक्षणत्वात् जातित्वे सतीति च विशेषणीयं तेनो-त्पत्तिकालावच्छिन्नो घटो गन्धवानित्यत्र बाधेन प्रत्यवस्थाने नातिव्याप्तिः असिद्ध्यादिदेशनाभासा चेयम् ॥ १२ ॥

अत्रोत्तरमाह । उत्पन्नस्य तथा भावात् घटाद्यात्मकत्वात् तत्र कार-णस्य हेतोरुपपत्तेः सत्त्वात् कथं कारणप्रतिषेधः अयमाशयः पक्षे हेत्व-भावोऽसिद्धिः नत्वनुत्पन्ने हेत्वभावः सम्भवति अधिकरणाभावात् न हि हेत्वभावमात्रासिद्धिः त्वदीयहेतोरपि क्वचिदभावसत्त्वात्तेन दृष्टान्तासि-द्धिर्व्याख्याता यदा कदाचिद्धेतुसत्त्वेनैव दृष्टान्तत्वोपपत्तेः एवं हेत्वादीनां यदा कदाचित्पक्षे सत्त्वादेव हेत्वादिभावो न तु सार्व्वत्रिको तदपेक्षेति ॥१३

इत्यनुत्पत्तिसमप्रकरणम् ॥ ६३ ॥

क्रमप्राप्तं संशयसमं लक्षयति । नित्यानित्यसाधर्म्यादिति संशयका-रणोपलक्षणं तेन समानधर्मदर्शनादिर्यत्किञ्चित्संशयकारणबलात् संश-येन प्रत्यवस्थानं संशयसमः अधिकन्तूदाहरणपरं तथा हि शब्दोऽनित्यः कार्य्यत्वाद्घटवदित्युक्ते सामान्ये गोत्वादौ दृष्टान्ते घटे ऐन्द्रियकत्वं तुल्यं यथा कार्य्यत्वान्निर्णायकादनित्यत्वं निर्णीयते तथा ऐन्द्रियकत्वात्संशय-कारणादनित्यत्वं सन्दिह्यतां एवं शब्दत्वाद्यसाधर्म्मदर्शनादपि संशयो बोध्यः तथा च हेतुत्वाऽप्रामाण्यशङ्काधानद्वारा साध्यसंशयात् सत्प्रति-पक्षदेशनाभासेयम् ॥ १४ ॥

अत्रोत्तरम् । साधर्म्यात्साधर्म्यदर्शनात् संशय आपाद्यमानेऽपि न सं-शयो वैधर्म्याद्वैधर्म्यदर्शनात् यदि च कार्य्यत्वरूपविशेषदर्शनेऽपि संशयस्त-

दाऽत्यन्तसंशयप्रसङ्गः संशयानुच्छेदप्रसङ्गः न च तथाऽभ्युपगन्तुं शक्यमित्याह नित्यत्वेति सामान्यस्य सम नधर्म्मदर्शनस्य नित्यत्वानभ्युपगमात् नित्यसंशयजनकत्वानभ्युपगमात्तथा सति त्वदीयहेतुरपि न परपक्षप्रतिषेधकः स्यादिति भावः सामान्यस्य गोत्वादेर्नित्यत्वानभ्युपगमात् नित्यत्वानभ्युपगमप्रसङ्गात् तत्रापि साधारणधर्म्मप्रमेयत्वादिना संशय एव स्यादिति केचित् ॥ १५ ॥ इति संशयसमप्रकरणम् ॥ ६५ ॥

क्रमप्राप्तं प्रकरणसमं लक्षयति । उभयसाधर्म्यात् अन्वयसहचाराद्व्यतिरेकसहचाराद्वा प्रक्रियाप्रकर्षेण क्रियासाधनं विपरीतसाधनमिति फलितार्थः तत्सिद्धेस्तस्य पूर्व्वमेव सिद्धेः तथाचाधिकबलत्वेनारोपितप्रमाणान्तरेण बाधेन प्रत्यवस्थानं प्रकरणसमः यथा शब्दोऽनित्य कृतकत्वादित्युक्ते नैतदेवं श्रावणत्वेन नित्यत्वसाधकेन बाधात् बाधदेशनाभासा चेयम् ॥१६॥

अत्रोत्तरमाह । प्रतिपक्षाद्विपरीतसाध्यसाधकत्वेनाभिमताच्छ्रावणत्वादितः प्रकरणसिद्धिद्वारा मदीयसाध्यस्य यः प्रतिषेधः त्वया क्रियते तस्यानुपपत्तिः कुतः प्रतिपक्षोपपत्तेः त्वत्पक्षापेक्षया प्रतिपक्षस्य मदीयपक्षस्योपपत्तेः साधनात् अयमाशयः श्रावणत्वेन पूर्व्वं नित्यत्वस्य साधनाद्यो बाध उच्यते स नोपपद्यते पूर्व्वं साधितस्य बलवत्त्वाभावात् कदाचित्कृतकत्वेनानित्यत्वस्यापि पूर्व्वं साधनादिति त्वत्पक्षप्रतिषेधोऽपि स्यात् ॥१७॥

इति प्रकरणसमप्रकरणम् ॥ ६५ ॥

क्रमप्राप्तमहेतुसमं लक्षयति । त्रैकाल्यं कार्य्यकालतत्पूर्वापरकालाः तेन हेतोरसिद्धः हेतुत्वासिद्धेः अयमर्थः दण्डादिकं घटादेर्न पूर्व्ववर्त्तितया कारणं तदानीं घटादेरभावात् कस्य कारणं स्यात् अत एव न घटाद्युत्तरकालवर्त्तितयाऽपि नवा समानकालवर्त्तितया तुल्यकालवर्त्तिनोः सव्येतरविषाणयोरिवाविनिगमनापत्तेः तथा च कालसम्बन्धखण्डनेनाहेतुतया प्रत्यवस्थानमहेतुसमः कारणमात्रखण्डनेन ज्ञप्तिहेतोरपि खण्डनान्न तदसंग्रहः प्रतिकूलतर्कदेशनाभासा चेयम् ॥ १८ ॥

अत्रोत्तरमाह । त्रैकाल्यासिद्धिस्त्रैकाल्येन याऽसिद्धिरुक्ता सा न कुतः हेततः साध्यसिद्धेः त्वयाऽप्यभ्युपगमात् ॥१९॥

पूर्व्ववर्त्तितामात्रेणैव हेतुतासम्भवात् अन्यथा त्वदीयहेतोरपि साध्यं न सिध्येदित्याह। हेतुफलभावखण्डने प्रतिषेधस्याप्यनुपपत्तेः प्रतिषेद्धव्यस्य परकीयहेतोर्न प्रतिषेध इत्यर्थः ॥ २० ॥

इति अहेतुसमप्रकरणम् ॥ ६६ ॥

क्रमप्राप्तमर्थापत्तिसमं लक्षयति। अर्थापत्तिरर्थापत्त्याभासः तथा चार्थापत्त्याभासेन प्रतिपक्षसाधनाय प्रत्यवस्थानमर्थापत्तिसमः अयमाशयः अर्थापत्तिर्हि उक्तेनानुक्तमाक्षिपति यथा शब्दोऽनित्य इत्युक्तेऽर्थादापद्यतेऽन्यत् नित्यं तथा च दृष्टान्तासिद्धिः विरोधश्च कृतकत्वादनित्य इत्युक्तेऽर्थादापन्नम् अन्यस्माद्धेतोर्बाधः सत्प्रतिपक्षो वा अनुमानादनित्य इत्युक्ते प्रत्यक्षान्नित्य इति च बाधः विशेषविधेः शेषनिषेधफलकत्वमित्यभिमानः सर्व्वदोषदेशनाभासा चेयम् ॥ २१ ॥

अत्रोत्तरम्। किमुक्तेन अनुक्तं यत्किञ्चिदेवार्थादापद्यते उक्तोपपादकं वा आद्ये त्वत्पक्षहानिरप्यापाद्यतां त्वयानुक्तत्वात् अन्त्ये अस्या अर्थापत्तेरनैकान्तिकत्वम् एकान्तिकत्वम् एकपक्षसाधकत्वं बलं तन्नास्ति न हि अनित्य इत्यस्योपपादकं नित्यत्वमिति न हि विशेषविधिमात्रं शेषनिषेधफलकमपि तु सति तात्पर्य्ये क्वचित् न हि नीलोघट इत्युक्ते सर्व्वमन्यदनीलमिति क्वचित्प्रतिपद्यते ॥२२॥

इति अर्थापत्तिसमप्रकरणम् ॥ ६७ ॥

अविशेषसमं लक्षयति। एकस्य धर्म्मस्य कृतकत्वादेः शब्दे घटे चोपपत्तेः सत्त्वात् यदि शब्दघटयोरनित्यत्वेनाविशेषः उच्यते तदा सर्व्वेषामविशेषप्रसङ्गः कुतः सद्भावोपपत्तेः सतः सन्मात्रस्य ये भावाधर्म्माः सत्त्वप्रमेयत्वादयस्तेषामुपपत्तेः सत्त्वात् तथा च सर्व्वेषामभेदे पक्षाद्यविभागः सर्व्वेषामेकजातीयत्वेऽवान्तरजात्युच्छेदः सर्व्वेषामनित्यत्वे जात्यादिविलय इत्यादि तथा च सन्मात्रवृत्तिधर्म्मेणाविशेषापादनमविशेषसमेति फलितम् अत्र चाविशेषसम इति लक्ष्यनिर्देशः सद्भावोपपत्तेः सर्व्वाविशेषप्रसङ्गादिति लक्षणं शेषं व्युत्पादकं प्रतिकूलतर्कदेशनाभासा चेयम् ॥२३॥

अत्रोत्तरमाह। तद्धर्म्मस्तस्य हेतोर्धर्म्मोव्याप्त्यादिस्तस्य क्वचित् क-

तकत्वादौ उपपत्तेः सत्त्वात् क्वचित् सत्त्वादौ अनुपपत्तेः अभावात् त्वदुक्तस्य प्रतिषेधस्याभावोऽसम्भव इत्यर्थः ॥ २४ ॥

इति अविशेषसमप्रकरणम् ॥ ६८ ॥

उपपत्तिसमं लक्षयति । उभयं पक्षप्रतिपक्षौ तयोः कारणस्य प्रमाणस्य उपपत्तेः सत्त्वात् तथा च व्याप्तिमपुरस्कृत्य यत्किञ्चिद्धर्म्मेण परपक्षदृष्टान्तेन स्वपक्षसाधनेन प्रत्यवस्थानम् उपपत्तिसमः यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते यथा त्वत्पक्षेऽनित्यत्वे प्रमाणमस्ति तथा मत्पक्षोऽपि सप्रमाणकः त्वत्पक्षमत्पक्षान्यतरत्वात् त्वत्पक्षवत् तथा च बाधः प्रतिरोधो वा तद्दूषणाभासा चेयम् ॥ २५ ॥

अत्रोत्तरमाह । अयं त्वदुक्तप्रतिषेधो न सम्भवति कुतः मत्पक्षे उपपत्तिकारणस्य मत्पक्षसाधकप्रमाणस्य त्वयाऽभ्यनुज्ञानात् त्वयाहि मत्पक्षस्य दृष्टान्तीकरणेन सप्रमाणकत्वमनुज्ञातमतः कथं तत्प्रतिषेधः शक्यते कर्त्तुम् अनुज्ञातस्यापि प्रतिषेधे स्वपक्ष एव किं न प्रतिषिध्यते ॥ २६ ॥

इति उपपत्तिसमप्रकरणम् ॥ ६९ ॥

उपलब्धिसमं लक्षयति । वादिना निर्दिष्टस्य कारणस्य साधनस्याभावेऽपि साध्यस्योपलम्भात् प्रत्यवस्थानमुपलब्धिसम इत्यर्थः तथाहि पर्व्वतो वह्निमान् धूमादित्यादिकं वह्न्यवधारणार्थमुच्यते न च तत्सम्भवति धूमं विना आलोकादितोऽपि वह्निसिद्धेः तथा च न तस्य साधकत्वमिति प्रतिकूलतर्कः स वा धूमाद्वह्निमानेवेत्यवधारणं द्रव्यत्वादेरपि धूमेन साधनात् न वा पर्वत एव वह्निमानेवेत्यादिकम् अवधारयितुं शक्यते महानसादेरपि वह्निमत्त्वादन्यथादृष्टान्तासिद्धिः स्यात् एवं वह्निशून्यपर्व्वतस्यापि सत्त्वाद्बाध इत्यादि तद्दूषणाभासा चेयम् ॥ २७ ॥

अत्रोत्तरमाह । कारणान्तरात् साधनान्तरादालोकादितोऽपि तस्य धर्मस्य साध्यस्योपलब्धेस्त्वदुक्तः प्रतिषेधो न सम्भवति अयमाशयः नह्विवयमवधारणार्थं वह्निमान् धूमादित्यादिकं प्रयुञ्ज्महे अपितु सन्दिग्धस्य वह्नेः सिद्ध्यर्थं अन्यथा त्वदुक्तमसाधकतासाधनमपि न स्यादसाधकतासाधकान्तरस्यापि सत्त्वात् ॥ २८ ॥ इति उपलब्धिप्रकरणम् ॥ ७० ॥

अनुपलब्धिसमं लक्षयति। यद्यपि चेयं द्वितीयाध्याये दर्शिता दूषिता च तथाप्यनुपलब्धिसमजातिरेवमिति तत्रानुक्तेरत्र क्रमप्राप्ताऽभिधीयते तत्रायं क्रमः नैयायिकैस्तावच्छब्दानित्यत्वमेव साध्यते यदि शब्दो नित्यः स्यादुच्चारणात् प्राक्कुतोनोपलभ्यते न हि घटाद्यावरण कुड्यादिवच्छब्दस्यावरणमस्ति तदनुपलब्धेरिति तत्रैवं जातिवादी प्रत्यवतिष्ठते यद्यावरणानुपलब्धेरावरण भावः सिध्यति तदा आवरणानुपलब्धेरप्यनुपलम्भादावरणानुपलब्धेरप्यभावः सिध्येत् तथाचावरणानुपलब्धिप्रमाणक आवरणाभावो न स्यादपित्वावरणोपपत्तिरेव स्यादिति शब्दनित्यत्वेनोक्तं बाधकं युक्तं नन्वनुपलब्धेरनुपलब्ध्यन्तरानपेक्षणात् कथमेवमिति चेत् इत्थं अनुपलब्धेरनुपलब्ध्यन्तरानपेक्षणे स्वयमेव स्वस्मिन्ननुपलब्धिरूपेति वाच्यं तथा च तयैवानुपलब्ध्यानुपलब्धत्वसम्भवात्तदभावसिद्धेः स्वात्मन्यनुपलब्धिरूपत्वाभावेऽनुपलब्धित्वमेव न स्यात् अनुपलब्धेरनुपलब्ध्यन्तरापेक्षणेऽनवस्था स्पष्टैव इत्यन्नैवंरूपेण प्रत्यवस्थानमनुपलब्धिसम इत्यर्थः प्रतिकूलतर्कदेशनाभासा चेयम् ॥ २९ ॥

अत्रोत्तरमाह। अनुपलब्धिः आत्मन्यनुपलब्धिरिति कोऽर्थः स्वयमनुपलब्धिरूपेति चेद्भवत्येव स्वविषयिण्यनुपलब्धिरिति चेन्नेदं प्रसक्तं अनुपलब्धेरनुपलम्भात्मकत्वात् उपलम्भाभावात्मकत्वात् अभावस्य च निर्विषयकत्वात् स्वात्मन्यनुपलब्धित्वाभावेऽनुपलब्धित्वमेव कथमस्या इति चेत् कतमोविरोधः नहि घटः स्वविषयो न भवतीति नायं घटः आवरणाभावः कथमनुपलब्धिविषय इति चेत् क एवमाह किन्त्वनुपलब्धिसहकृतेन्द्रियग्राह्यत्वादनुपलब्धिग्राह्य इत्युपचर्य्यते अतस्तदनुपलब्धेरनुपलम्भादित्यादिकमहेतुः अन्यथा त्वत्साधनमपि दोषानुपलब्धेरनुपलम्भात् सदोषमेव स्यादिति ॥ ३० ॥

नन्वनुपलब्धेः स्वस्मिन्ननुपलब्धित्वाभावेऽनुपलब्धिरपि केन सिध्येदतआह। अध्यात्मं आत्मन्यधि ज्ञानविकल्पानां ज्ञानविशेषाणां भावाभावयोर्मनसा सम्वेदनात् घटं साक्षात्करोमि वह्निमनुमिनोमि नानुमिनोमीत्येवं ज्ञानविशेषतदभावानां मनसैव सुग्रहत्वादिति भावः ॥ ३१ ॥

इति अनुपलब्धिसम प्रकरणम् ॥ ७१ ॥

अनित्यसमं लक्षयति । यदि दृष्टान्तघटसाधर्म्यात् कृतकत्वादिना सह तुल्यधर्मतोपपद्यत इत्यतः शब्देऽनित्यत्वं साध्यते तदा सर्व्वस्यैवानित्यत्वं स्यात् सत्त्वादिरूपसाधर्म्यसम्भवात् नचेदमर्थान्तरग्रस्तमिति वाच्यं सर्व्वस्यानित्यत्वे व्यतिरेकाग्रहादनुमानदूषणे तात्पर्य्यात् परस्यान्वयव्यतिरेकिण एवानुमानत्वादित्याशयः तथा च व्याप्तिमपुरस्कृत्य यत्किञ्चिद्दृष्टान्तसाधर्म्येण सर्व्वस्य साध्यवत्त्वापादनमनित्यसमा साध्यपदादविशेषसमाऽतोऽव्यवच्छेदस्तत्र सर्व्वाविशेष एवापाद्यते ननु सर्व्वस्य साध्यवत्त्वं यत्तु अनित्यत्वेन समाऽनित्यसमेति भावप्रधानो निर्द्देशस्तथा च अन्वर्थलक्षमेव लक्षणमिति तन्न वह्निमान् धूमादित्यादौ महानससाधर्म्यात् सत्त्वात्सर्व्वस्य वह्निमत्त्वं स्यादित्यस्य जात्यन्तरत्वापत्तेः आचार्य्यास्तु साधर्म्यं वैधर्म्यस्याप्युपलक्षकं यथाकाशवैधर्म्यात् कृतकत्वाच्छब्दोऽनित्यस्तथाकाशवैधर्म्यादाकाशभिन्नत्वादितः सर्व्वमेवानित्यं स्यादित्यत्र लक्षणे यत्किञ्चिद्धर्म्मेणेत्येव वाच्यमित्याहुः अत्र च वैधर्म्यस्य विपक्षावृत्तित्वान्न सर्व्वस्य साध्यवत्त्वापादनं किन्त्वात्मादीनामप्यनित्यत्वं स्यादिति तत्र चार्थान्तरमित्यवधेयं प्रतिकूलतर्कदेशनाभासा चेयम् ॥ ३२ ॥

अत्रोत्तरमाह । यदि यत्किञ्चित्साधर्म्यात्सर्व्वस्य साध्यवत्त्वमापादयतस्तव साधर्म्यस्यासाधकत्वमभिमतं तदा त्वत्कृतप्रतिषेधस्याप्यसिद्धिः तस्यापि प्रतिषेध्यसाधर्म्येण प्रवृत्तत्वात् त्वया ह्येवं साध्यते कृतकत्वं न साधकं दृष्टान्तसाधर्म्यरूपत्वात्सत्त्वादिवत् अत्र च त्वदीयहेतुस्त्वत्प्रतिषेध्येन मदीयहेतुना कृतकत्वेन सत्त्वेन च सह साधर्म्य रूपस्तथाचायमपि न साधकः स्यात् ॥ ३३ ॥

यदि च साधर्म्यमात्रं न साधकमपि तु व्याप्तिसहितमित्यभिमतं तदा कृतकत्वे तदस्ति न तु सत्त्व इति विशेष इत्याह । साध्यसाधनभावेन व्याप्यव्यापकभावेन दृष्टान्ते प्रज्ञातस्य प्रमितस्य तस्य हेतुत्वात्साधकत्वात् तस्य हेतुत्वस्य उभयथा अन्वयेन व्यतिरेकेण च भावात् मदीयहेतौ सत्त्वात् सत्त्वादिनाऽविशेष इति यदुक्तं तन्न भवति ॥ ३४ ॥

इत्यनित्यसमप्रकरणम् ॥ ७२ ॥

नित्यसमं लक्षयति । अनित्यस्य भावः अनित्यत्वं तस्य नित्यं सर्व्व-

कीलं स्वीकारे अनित्ये शब्दे नित्यत्वं स्यादित्यापादनं नित्यसमा अयमाशयः अनित्यस्य नित्यमस्वीकारेऽनित्यत्वाभावदशायां तस्यानित्यत्वं न तस्यापि नित्यत्वापत्तिः नहि दण्डाभावदशायां दण्डीत्युच्यते अतोऽनित्यत्वं नित्यमेवस्वीकार इत्यभ्युपगन्तव्यं तथा च शब्दस्यापि नित्यत्वापत्तिः तेन बाधः सत्प्रतिपक्षो वा तद्देशनाभासा चेयं एवमनित्यत्वं यदि नित्यं कथं शब्दस्यानित्यतां कुर्य्यात् नहि रक्तं महारजनं परस्य नीलतां सम्पादयति अथाऽनित्यं तदा तदभावदशायां अनित्यत्वं न स्यादित्यादिक मूह्यं एतदनुसारेण लक्षणमपि कार्य्यमित्याचार्य्याः वयन्तु अनित्यस्य भावो धर्म्मस्तस्य नित्यमभ्युपगमेऽनित्यत्वेनाभ्युपगतस्य नित्यत्वं स्यात् यथा क्षितिः सकर्त्तकेत्यत्र अनित्यक्षितेर्धर्म्मः सकर्त्तकत्वं त्वया क्षितौ नित्यमुपेयते नवा नचेत् तदा साध्याभावादंशतोबाधः अथ क्षितौ नित्यमेव सकर्त्तकत्वं विरुद्धं तद्देशनाभासा चेय मिति ब्रूमः ॥ ३५ ॥

अत्रोत्तरमाह। प्रतिषेध्ये मत्यन्ते शब्दे सर्व्वदा अनित्यभावात् अनित्यत्वात् अनित्ये शब्दे अनित्यत्वमुपपद्यते नहि सम्भवति अनित्यत्वं नित्यमस्ति अथ च तन्नित्यमिति व्याघातात् नच नित्यमिति सर्वकालमित्यर्थः तथा च शब्दस्यानित्यत्वे कथं सर्व्वकालमनित्यत्वसम्बन्ध इति वाच्यं सर्व्वकालमित्यस्य यावत्सत्त्वमित्यर्थात् अतः त्वत्कृतः प्रतिषेधो न सम्भवति मतान्तरे तु अनित्येऽनित्यत्वोपपत्ते हेतोस्त्वपायः प्रतिषेधः कृतः स न सम्भवतीत्यर्थः ॥ ३६ ॥

इति नित्यसमप्रकरणम् ॥ ७३ ॥

कार्य्यसमं लक्षयति। प्रयत्नकार्य्यस्य प्रयत्नसम्पादनीयस्यानेकत्वात् अनेकविषयत्वात् अयमर्थः शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वादित्युक्ते प्रयत्नानन्तरीयकत्वं प्रयत्नकार्य्ये घटादौ प्रयत्नानन्तरोपलभ्यमाने कीलकादावपि दृष्टन्तत्र द्वितीयं न तज्जन्यत्वसाधकं आद्ये तु असिद्धं तथा च सामान्यत उक्ते हेतोरनभिमतविशेष निराकरणेन प्रत्यवस्थानं कार्य्यसमा असिद्धदेशनाभासा चेयं अथवा प्रयत्नकार्य्याणां प्रयत्नकर्त्तव्यानां कर्त्तव्यप्रयत्नानामिति यावत् तादृशानां अनेकविधत्वादुक्तान्यस्य व्याघातकमुत्तरं कार्य्यसमा तथा चास्या आकृतिगणत्वात्पञ्चत्वानुदर्शितानाः

मपि परिग्रहः यथा त्वत्पक्षे किञ्चिद्दूषणं भविष्यतीति शङ्काऽपि शाठीसमा कार्य्यकारणभावस्योपकारनियतत्वेऽनवस्थेत्यनुपकारसमा इत्यादि ॥ ३७ ॥

अत्रोत्तरम् । शब्दस्य कार्य्यान्यत्वेऽकार्य्यत्वे प्रयत्नस्य वक्तृप्रयत्नस्य अहेतुत्वं अकारणत्वं इदञ्च तदा स्यात् यद्यनुपलब्धिकारणमावरणादि कमुपपद्यते न च तच्छब्देऽस्तीत्यर्थः आकृतिगणपक्षे तु कार्य्याणां जातीनामन्यत्वे नानाविधत्वे इदमुत्तरं प्रयत्नस्य त्वदीयदूषणप्रयत्नस्य अहेतुत्वं असाधकतासाधकत्वाभावः उपलब्धेः कारणस्य प्रमाणस्य निर्दोषवाक्यस्य या उपपत्तिः निर्दोषवाक्याधीनोपपादनं तदभावात् तद्वाक्यस्य स्वव्याघातकत्वादित्यर्थः ॥ ३८ ॥

इति कार्य्यसमप्रकरणम् ॥ ७४ ॥

कार्य्यसमप्रकरणस्य एवं तावज्जातिवादिनं प्रति [सर्वत्र सदुत्तरैणैवोद्धारः कार्य्य इत्यभिहितं तदेवाभिमतं तत्त्वनिर्णयविजयफलकत्वं कथायां सम्पद्यते असदुत्तरोद्भावने तु बध्ययोः संप्रयोगवन्नाभिमतफलासिद्धिरिति व्युत्पादयितुं कथाभासरूपां षट्पक्षीं शिष्यशिक्षायै प्रदर्शयति । प्रयत्नानन्तरीयकत्वं न शब्दोनित्यत्वं साधयति अनैकान्तिकत्वादिति योदोषः स त्वत्पक्षेऽपि तुल्यः प्रयत्नाभिव्यङ्ग्यत्वस्याप्यसाधकत्वात् अथवा अनैकान्तिकत्वादसाधक इति त्वया प्रतिषेधः कृतः तत्राप्ययं दोषः समानः नह्यनैकान्तिकत्वं सर्व्वस्यैवासाधकत्वं साधयति स्वस्यैवासाधकत्वासाधनत्वात् ॥ ३९ ॥

सेयं मतानुज्ञा किं कार्य्यसमायामेव नेत्याह । एवंविधमसदुत्तरं सर्व्वत्रैव जातौ सम्भवतीत्यर्थः यथा शब्दोऽनित्यः शब्दत्वादित्यत्र नित्याकाशसाधर्म्यादमूर्त्तत्वान्नित्यः स्यादिति साधर्म्यसमायां आकाशधर्म्यानित्यत्वे आकाशवच्छब्दे परमहत्त्वं स्यादित्युत्कर्षसमा एव मन्यत्राप्यूह्यं यद्यप्ययमतिदेशः षट्पक्ष्यनन्तरमेव कर्त्तुमुचितस्तथापि त्रिपक्ष्यादिकमपि सूचयितुमत्रैवोक्तः उभयासदुत्तरत्वबोधफला हि षट्पक्षी त्रिपक्ष्यादावपि तत्फलकत्वं तुल्यमिति भावः तर्हि त्रिपक्ष्यामेव मध्यस्थेन पर्य्यनुयोज्योपेक्षणस्योद्भावने कथासमाप्तौ कुतः षट्पक्षीति चेत् पुंसां स्फुरणवैचित्र्येण तत्सम्भवात् ॥ ४० ॥

तुल्यबलविरोधोविप्रतिषेधः तथा च प्रतिषेधस्य यो विप्रतिषेधस्तत्र प्रतिषेधदोषवद्दोष इत्यर्थः तथाहि शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वादिति स्थापनावादिनः प्रथमः पक्षः प्रयत्नकार्य्यानेकत्वात् कार्य्यसम इति प्रतिवादिनो द्वितीयः पक्षः प्रतिषेधाप्रतिषेधेऽप्यनैकान्तिकत्वं तुल्यमिति वादिनस्तृतीयः पक्षः विप्रतिषेधस्तत्रापि तथैवानैकान्तिकत्वं तत्समानदोषोद्भावनं वा चतुर्थः पक्षः ॥ ४१ ॥

पञ्चमं पक्षमाह प्रतिषेधं द्वितीयं पक्षं सदोषमभ्युपेत्य तत्र मदुक्तं दोषमनुद्धृत्य प्रतिषेधविप्रतिषेधे मदीयपक्षे तृतीये समानं दोषं प्रसञ्जयतस्तव मतानुज्ञानामकं निग्रहस्थानमित्यर्थः ॥ ४२ ॥

षष्ठं पक्षमाह। स्वपक्षः स्थापनारूपः प्रथमः पक्षः तं लक्षीकृत्य प्रवृत्तोद्वितीयपक्षः स्वपक्षलक्षणस्तस्यापेक्षा समादरः तत्र दोषानुद्भावनमिति फलितार्थः तथा च मदीयपक्षे दोषमनुद्भाव्यैव स्वपक्षोपपादनं कर्त्तुं यस्त्वया हेतुर्निर्दिष्टः प्रतिषेधेऽपि समानोदोष इति तावता तवापि मतानुज्ञा द्रष्टव्येत्यर्थः तदेवं षट्पक्ष्यामुभयोरप्ययुक्तवादित्वादर्थासिद्धिः यदि तु स्थापनावादी जातिवादिनं सदुत्तरेणैव दूषयति तदा षट्पक्षी न प्रवर्त्तत इति ॥ ४३ ॥ इति कथाभासप्रकरणम् ॥ ७५ ॥

इति श्रीविश्वनाथभट्टाचार्य्यकृतायां न्यायसूत्रवृत्तौ पञ्चमाध्यायस्याद्यमाह्निकम् ॥ १ ॥

---

अथेदानीं निग्रहस्थानविशेषलक्षणाभिधानं तदेव चाह्निकार्थः सप्त चेह प्रकरणानि तत्र चाद्यं प्रतिज्ञाहेत्वन्यतराश्रित निग्रहस्थानपञ्चकविशेषलक्षणप्रकरणम् अन्यानि च यथास्थानं वक्ष्यन्ते तत्र विशेषलक्षणार्थमादौ विभजते। अत्र चकारार्थे तेन एतानि तु निग्रहस्थानानि न पुनरपस्मारादिनाऽननुभाषणादिकं न वा झटिति सम्बरणेन तिरोहिता च वाणीत्यर्थोलभ्यत इति प्राञ्चः नव्यास्तु चकारोऽनुक्तसमुच्चये तेन दृष्टान्ते साधनवैकल्यादीनां परिग्रहः ॥ १ ॥

तत्र क्रमेण प्रतिज्ञाहान्यादीनां लक्षणेषु वक्तव्येषु प्रथमोद्दिष्टां प्रतिज्ञाहानिं लक्षयति। प्रतिकूलो दृष्टान्तो यत्र स प्रतिदृष्टान्तः परपक्षः

स्वः स्वीयः दृष्टान्तो यत्र स स्वदृष्टान्तः स्वपक्षः तथा च स्वपक्षे परपक्षधर्मा-भ्यनुज्ञा प्रतिज्ञाहानिः स्वयं विशिष्याभिहितपरित्याग इति फलितार्थः सिद्धान्तस्तु स्वयं विशिष्य नाभिधीयत इति नापसिद्धान्तसाङ्कर्य्यं सेयं पक्षहेतुदृष्टान्तसाध्यतदन्यहानिभेदात् पञ्चधा भवति यथाशब्दोऽनित्यः कृतकत्वादित्युक्ते प्रत्यभिज्ञया बाधितविषयोऽयमित्युत्तरिते अस्तु तर्हि घटएव पक्ष इति एवं तत्रैव ऐन्द्रियकत्वादिति हेतोरनैकान्तिकत्वमिति प्रत्युक्ते अस्तु कृतकत्वादिति हेतुरिति एवं पर्व्वतो वह्निमान्धूमादयोगोलकवदित्युक्ते दृष्टान्तः साधनविकल इति प्रत्युक्ते अस्तु तर्हि महानसवदिति एवं अत्रैव सिद्धसाधने च प्रत्युक्ते अस्तु तर्हि इन्धनवानिति अन्यहानिस्तु विशेषणहान्यादिः यथा तत्रैव नीलधूमादित्युक्ते ऽसमर्थविशेषणत्वेन प्रत्युक्ते अस्तु तर्हि धूमादिति हेतुरित्यादि ॥ २ ॥

प्रतिज्ञान्तरं लक्षयति। प्रतिज्ञातस्यार्थस्य प्रतिषेधे कृते त दूषणोद्दिधीर्षया धर्म्मस्य धर्म्मान्तरस्य विशिष्टः कल्पोविकल्पः तस्माद्विशेषणान्तर विशिष्टतया प्रतिज्ञातार्थस्य कथनमिति फलितार्थः प्रतिषेध इत्यनेन झटिति सम्बरणे विलम्बेनापि स्वयं दूषणं विभाव्य विशेषणे न दोषइत्युक्तं प्रतिज्ञातार्थस्येत्युपलक्षणं हेत्वतिरिक्तार्थस्येति तच्च तेन उदाहरणान्तरमुपनयान्तरञ्च प्रतिज्ञान्तरत्वेन संगृहीतं भवति इदञ्च पक्षसाध्यविशेषणभेदात् प्रत्येकं द्विविधं यथा शब्दोऽनित्य इत्युक्ते ध्वनौ बाधेन परेण प्रत्युक्ते वर्णात्मकः शब्दः पक्ष इति प्रतिज्ञान्तरं न चेदमर्थान्तरं प्रकृतोपयोगात् नचेयं प्रतिज्ञाहानिः पूर्व्वोक्तस्यापरित्यागात् एवं पर्व्वतोवह्निमान् सुरभिमलिनधूमवत्त्वादित्युक्ते असमर्थविशेषणत्वेन च परेण प्रत्युक्ते कृष्णागुरुप्रभववह्निमानित्यत्र एवं तादृशवह्नौ साध्ये यः सुरभिमलिनधूमवान् स वह्निमानित्युदाहरणे न्यूनत्वेन प्रत्युक्ते स तादृशवह्निमानित्यत्र एवमन्यदप्यूह्यम् ॥ ३ ॥

प्रतिज्ञाविरोधं लक्षयति। अत्र च प्रतिज्ञाहेतुपदे कथाकालीनवाक्यपरे तथा च कथायां स्ववचनार्थविरोधः प्रतिज्ञाविरोधः यद्यपि काञ्चनमयः पर्वतोवह्निमान् पर्वतः काञ्चनमयवह्निमान् ह्रदोवह्निमान् ह्रदत्वात् पर्व्वतोवह्निमान् काञ्चनमयधूमादित्यादौ हेत्वाभासान्तरसाङ्कर्यं

तथाप्युपधेयसङ्करेऽप्युपाधेरसाङ्कर्यान्न दोषः न चासङ्कीर्णस्थलाभावः पर्वतोवह्निमान् धूमात् योयो धूमवान् स निरग्निरित्युदाहरणे निरग्निस्तायमित्युपनये च तल्लाभात् एवं निगमनेऽपि बोध्यम् ॥ ४७ ॥

प्रतिज्ञासन्न्यासं लक्षयति । पक्षस्य स्वाभिहितस्य परेण प्रतिषेधे कृते सति तत्परिजिहीर्षया प्रतिज्ञातार्थस्थापनधनमपलापइत्यर्थः यथा शब्दोऽनित्य ऐन्द्रियकत्वादित्युक्ते सामान्ये व्यभिचारेण परेण प्रत्युक्ते क एवमाह शब्दोऽनित्य इति ॥ ५ ॥

हेत्वन्तरं लक्षयति । अत्र च हेताविल्यनेन हेत्ववयवांशो न विवक्षितोऽपि तु साधकांशः स च हेत्ववयवस्य उदाहरणादिस्थोवा अविशेषोक्त इति पूर्वोक्तइत्यर्थं विशेषमिच्छत इति साभिप्रायं तेन परोक्तदूषणोद्दिधीर्षया तत्रैव हेतौ विशेषणान्तरप्रक्षेपोऽन्यहेतुकरणं वा द्वयमपि हेत्वन्तरं तथा च परोक्तदूषणोद्दिधीर्षया तत्रैव हेतौ पूर्वोक्तहेतुतावच्छेदकातिरिक्तहेतुतावच्छेदकविशिष्ट वचनं हेत्वन्तरं हेतौ विशेषणदानएव हेत्वन्तरमिति प्राञ्चः पूर्वोक्तत्वं हेत्ववयवे उदाहरणादौ वा यथा शब्दोऽनित्यः बाह्येन्द्रियप्रत्यक्षत्वादित्युक्ते सामान्येऽनैकान्तिकत्वेन च प्रत्युक्ते सामान्यवत्त्वे सतीति विशेषणं एवं विशिष्टहेतुसक्ता यद्बाह्येन्द्रियप्रत्यक्षं तदनित्यमित्युदाहरणे न्यूनत्वेन प्रत्युक्ते विशिष्टोक्तौ एवमुपनयविशेषणेऽपि ॥ ६ ॥ समाप्तं प्रतिज्ञाहेत्वन्यतराश्रितनिग्रहपञ्चकविशेषलक्षणप्रकरणम् ॥ ७६ ॥

अर्थान्तरं लक्षयति । प्रकृता प्रकृतोपयुक्तात् ल्यब्लोपे पञ्चमी तेन प्रकृतोपयुक्त मर्थमुपेक्ष्यासम्बद्धार्थाभिधानं अर्थान्तरं प्रकृतानाकाङ्क्षिताभिधानमिति फलितार्थः यथा शब्दोऽनित्यः कृतकत्वादित्युक्ता शब्दोगुणः स च आकाशस्येत्यादि ॥ ७ ॥

निरर्थकं लक्षयति । वर्णानां क्रमेण निर्देशोजवगतेत्यादिप्रयोगस्तत्तुल्योनिर्देशोनिरर्थकं निग्रहस्थानं अवाचकपदप्रयोग इति फलितार्थः वाचकत्वं शक्त्या निरूढलक्षणया शास्त्रपरिभाषया वा बोध्यं समयबन्धव्यतिरेकेणेति विशेषणीयं तेन यत्रापभ्रंशेन विचारः कर्त्तव्य इति

समयसबन्धस्तत्वापभ्रंशे न दोषः झटिति सम्बरणे तु न दोषइत्युक्तप्रायं अस्य सम्भवः प्रमादादित्यवधेयम् ॥ ८ ॥

अविज्ञातार्थं लक्षयति। त्रिरभिहितं वादिनेति शेषः त्रिरभिधानं चाम-वधानादिनाऽबोधनिरासाय परिषत्प्रतिवाद्यन्यतरेण विज्ञाते तु नावि-ज्ञातार्थमिति भावः तथा च अवच्छिताधिकलव्युत्पन्नपरिषत्प्रतिवादि-बोधानुकूलोपस्थित्यजनकवाचकवाक्यप्रयोगोऽविज्ञातार्थमिति वाचकत्व-नेन निरर्थकापार्थकव्युदासः अत्र च पराज्ञानापादनेन मम जयो भ-विष्यतीति भ्रमादुक्तिसम्भवः न च यथाकथञ्चित्परो जेतव्य इत्यज्ञानापादनं न्याय्यमेवेति वाच्यं तथासति भङ्गकाले परमदुर्बोधयत्किञ्चिदभिधानेनैव सर्वत्र जयसम्भवात् एतस्य त्रैधासम्भवः असाधारणतन्त्रमात्र प्रसिद्धं यथा पञ्चस्कन्धादयोबौद्धानान्तत्र रूपादयः पञ्चेन्द्रियाणि च रूपस्कन्धः सवि-कल्पकं संज्ञास्कन्धः रागद्वेषाभिनिवेशाः संस्कारस्कन्धः सुखदुःखे वेदना-स्कन्धः निर्विकल्पकं ज्ञानस्कन्धः द्वितीयमति प्रसक्तयोगमनपेचितरूढिकं यथाकश्यपतनयधृतिहेतुरयं त्रिनयनसमाननामधेयवान् तत्केतुमत्त्वा-दित्यादि तृतीयं श्लिष्टं यथा श्वेतो धावतीत्यादि एवं अतिद्रुतोच्चरितादि-कमपीति भाष्यं अत्र नाद्यस्य सम्भव उभय तन्त्राभिज्ञमध्यस्थे सति उभय-तन्त्राभिज्ञयोरेव विचारसम्भवादिति चेत् सत्यं तथापि यत्र नैयायिक-मीमांसकयोर्विचारेऽन्यतरो बौद्धतन्त्रादिपरिभाषया वदति तत्र निग्रह इत्याशयः तत्रापि चेत् यया कयाचित् परिभाषयोच्यतामिति परः प्रौढ्या वदतिन तत्राद्यस्योपादानमिति उत्तरयोस्तु न सर्वथै वेति ॥ ९ ॥

अपार्थकं लक्षयति। पौर्वापर्य्यं कार्य्यकारणभावस्तस्यायोगादस-म्भवात् शाब्दबोधजनकाकाङ्क्षाज्ञानाद्यभावादिति फलितार्थः अप्रतिसम्ब-द्धोऽसम्बद्धेऽर्थः प्रयोजनं शाब्दबोधरूपं यत्र यद्यपि दशदाडिमानि षडपू-पाः कुण्डमजाजिनमित्यादाववान्तरवाक्यादर्थबोधकत्वाद्व्याप्तिरति-व्याप्तिश्च निरर्थके तथाप्यभिमतवाक्यार्थबोधानुकूलाकाङ्क्षादिशून्यबोध-जनकपदत्वं तत् अ-विज्ञातार्थे तु तस्य बोधोभवत्येवेति नातिव्याप्तिः उदाहरणन्तु अयोग्यानासन्नानाकाङ्क्षवाक्यम् ॥ १० ॥ समाप्तमभिमतवा-क्यार्थाप्रतिपादकनिग्रहस्थानचतुष्टय प्रकरणम् ॥ ७५ ॥

अप्राप्तकालं लक्षयति। अवयवस्य कथैकदेशस्य विपर्य्यासो वैपरीत्यं तथा च समयबन्धविषयीभूतकथाक्रमविपरीतक्रमेणाभिधानं पर्य्यवसन्नं तत्रायं क्रमः वादिना साधनमुक्त्वा सामान्यतो हेत्वाभासाउद्धरणीयाद्युक्तेः पादः प्रतिवादिनस्तु तत्रोपालम्भो द्वितीयः पादः प्रतिवादिनः स्वपक्षसाधनं तत्र हेत्वाभासोद्धरणीयेति तृतीयः पादः जयपराजयव्यवस्था चतुर्थः पादः एवं प्रतिज्ञा हेत्वादीनां क्रमः तत्र सभाक्षोभव्यामोहादिना व्यत्यस्ताभिधानमप्राप्तकालमिति ॥ ११ ॥

न्यूनं लक्षयति ॥ अवयवेन स्वशास्त्रसिद्धेन तेन सौगतस्य ह्यवयवाभिधानेऽपि न न्यूनत्वं नन्ववयवहीनत्वं अवयवत्वावच्छिन्नाभावः तथा चाकथनमेव स्यादत आह्वान्यतमेनापीति, तथा च यत्किञ्चिदवयवशून्यावयवाभिधानं फलितं नचायमपसिद्धान्तः सिद्धान्तविरुद्धानभ्युपगमात् अपि तु सभाक्षोभादिनाऽनभिधानात् ॥ १२ ॥

अधिकं लक्षयति। हेतूदाहरणेत्युपलक्षणं दूषणाद्यधिकमपि बोध्यं तथा च कृतकर्त्तव्यापुनरुक्ताभिधानमिति फलितम् अनुवादस्तु न कृतकर्त्तव्यः साभिप्रायत्वात् प्रतिज्ञाधिक्यञ्च पुनरुक्तं धूमादालोकात् महानसवन्नत्वरवदित्यादिकन्तु विना समयबन्धं दार्ढ्यादिभ्रमादुक्तमधिकं यथा महानसं महानसवदिति तु नाधिकं किन्तु पुनरुक्तम् ॥१३॥ समाप्तं स्वसिद्धान्तानुरूपप्रयोगाभासनिग्रहस्थानत्रिक प्रकरणम् ॥ ७६ ॥

पुनरुक्तं लक्षयति। पुनर्वचनं पुनरुक्तं तस्य विभागार्थं शब्दार्थयोरिति तेन शब्दपुनरुक्तमर्थपुनरुक्तञ्च लभ्यते अनुवादेऽतिव्याप्तिवारणायान्यत्रानुवादादिति अनुवादान्यत्वे सतीत्यर्थः निष्प्रयोजनं पुनरभिधानं हि पुनरुक्तं अनुवादस्तु व्याख्यारूपः सप्रयोजनक एवेति भावः तथा च समानार्थक पूर्वानुपूर्वीक शब्दप्रयोगः शब्दपुनरुक्तं समानार्थकभिन्नानुपूर्वीक शब्दस्य निष्प्रयोजनं पुनरभिधानमर्थपुनरुक्तं आद्यं यथा घटोघट इति द्वितीयं तथा घटः कलसइति एतस्य प्रमादादिना सम्भवः ॥ १४ ॥

पुनरुक्तप्रभेदान्तरमाह। पुनरुक्तमित्यनुवर्त्तते यस्मिन्नुक्ते यस्यार्थस्यौत्सर्गिकी प्रतिपत्तिर्भवति तस्य तेन रूपेण पुनरभिधानं पुनरुक्तं इदमेव च अर्थपुनरुक्तमिति गीयते यथा वह्निरुष्ण इति पूर्वपदाच्चिप्तो

क्तिरियं उष्णोवह्निरिति उत्तरपदाक्षिप्तोक्तिः एवं वह्निरस्ति गेहे नास्तीति विध्याक्षिप्तोक्तिः जीवन् गेहे नास्ति बहिरस्तीति निषेधाक्षिप्तोक्तिः पुनरुक्तत्वं विध्यन्ते दत्ताध्यादिसम्मतं अन्ये तु शब्दपुनरुक्तं द्विविधं तस्यैव शब्दस्य पुनरभिधानं पर्य्यायेणाभिधानं अन्यत्पुनरर्थपुनरुक्तमित्याहुः ॥ १६ ॥

अननुभाषणं लक्षयति । परिषदा विज्ञातस्य विशिष्य बुद्धार्थस्य वादिना त्रिभिरभिहितस्य तथा च प्रथमवचनेऽननुभाषणे वादिना वारत्रयं वाक्यमिति दर्शितं तथा च त्रिभिरभिधानेऽपि यत्रानुभाषणविरोधी व्यापारः तत्राननुभाषणं निग्रहस्थानमित्यर्थः अज्ञान साङ्कर्य्यनिरासायाज्ञानमनाविष्कुर्वतेति विक्षेपसाङ्कर्य्यनिरासाय कथामविच्छिन्दतेति च विशेषणीयमित्याचार्य्याः न चाप्रतिभासाङ्कर्य्यं उत्तरप्रतिपत्तावपि सभाक्षोभादिनाऽननुभाषणसम्भवात् तदिदं चतुर्धा एकदेशानुवादाद्विपरीतानुवादात् केवलदूषणोक्त्या स्तम्भेन वेति सर्वनामपदेनानुवादात् पञ्चममित्याचार्य्याः क्वचिदज्ञानाप्रतिभाऽननुभाषणासाङ्कार्य्ये यन्निरसितुं शक्यते तदेवोद्भाव्यम् ॥ १७ ॥

अज्ञानं लक्षयति । भावे क्तः चकारस्य परिषदा विज्ञातस्येत्याद्यनुकर्षणार्थस्तथाच परिषदा विज्ञातस्य वादिना त्रिरभिहितस्याप्यविज्ञानमित्यर्थः इदञ्च किंवदसि बुध्यतएव नेत्याद्याविष्करणेन ज्ञातुं शक्यत इति ॥ १८ ॥

अप्रतिभां लक्षयति । उत्तरार्हे परोक्ते बुद्धेऽपि यत्रोत्तरसमये उत्तरं न प्रतिपद्यते तत्राप्रतिभा निग्रहस्थानं नचात्राननुभाषणस्यावश्यकत्वात् तदेव दूषणमस्त्विति वाच्यं परोक्ताऽननुवादे हि तत् यत्र परोक्तमनूद्यापि नोत्तरं प्रतिपद्यते तत्रासाङ्कर्य्यात् स्वसूचन श्लोकपाठाद्युन्नेया चेयम् ॥ १९ ॥

विक्षेपं लक्षयति। कार्य्यव्यासङ्गात्कार्य्यव्यासङ्गमुद्भाव्येत्यर्थः ल्यब्लोपे पञ्चमी कार्य्यव्यासङ्गस्यासम्भवात्कालान्तरकत्वेनारोपितः तेन तादृशकथाविच्छेदोविक्षेपः तेन राजपुरुषादिभिराकारणे गृहजनादिभिर्व्वावश्यककार्य्यार्थमाकारणे स्वगृहदाहादिकं पश्यतो गमने वा शिरोरोगादिना

प्रतिबन्धे वा न विक्षेपः ननु कार्यव्यासङ्गोद्भावनं कुतः सभाक्षोभादिना चेदननुभाषणमेव उत्तराप्रतिपत्त्या चेदप्रतिभैवेति चेन्न उत्तरावसराभावात् वस्तुतस्तूत्तरस्फूर्त्तावपि तद्दूषणसम्भावनया विक्षेपसम्भवात् यथा क्षितिः सकर्तृका कार्यत्वादित्युक्तम् अत्राङ्कुरे व्यभिचारस्तावन्मया उद्भाव्यस्तत्र चेदयं पक्षसमत्वं ब्रूयात् तदा मे किमुत्तरमतोऽस्य महार्णवलिखितं मया च विचारितं किञ्चित्कार्यमुद्भाव्य स्थे गत्वा इष्यत इत्येवं विक्षेपसम्भवात् ॥ ६२ ॥

मतानुज्ञां लक्षयति। दोषाभ्युपगमात् दोषमनुद्धृत्येत्यर्थः यथा शब्दोऽनित्यः श्रावणत्वादित्युक्ते ध्वनावनैकान्तिकत्वेन हेत्वाभासोऽयमित्युक्तौ शब्दोऽनित्यः कृतकत्वादिति साधिते ध्वनेरपि पक्षत्वान्न दोष इत्युक्तौ असिद्धत्वात् तवापि हेत्वाभासोऽयमित्युक्तौ सोऽयं मतानुज्ञया निगृहीतः स्यादप्रतिषिद्धमनुमतं भवतीति स्वपक्षे दोषाभ्युपगमात् ॥ ६३ ॥

पर्यनुयोज्योपेक्षणं लक्षयति। निग्रहस्थानं प्राप्तवतोऽनिग्रहः निग्रहस्थानानुद्भावनमित्यर्थः यत्र त्वनेकनिग्रहस्थानपाते एकतरोद्भावनं तत्र न पर्यनुयोज्योपेक्षणं अवसरे निग्रहस्थानोद्भावनत्वावच्छिन्नाभावस्यैव तत्त्वात् ननु वादिना कथमिदमुद्भाव्यं स्वकौपीनविवरणस्यायुक्तत्वादिति चेत् सत्यं मध्यस्थेनैवेदमुद्भाव्यं वादे च स्वयमुद्भावनेऽप्यदोषः ॥ ६४ ॥

निरनुयोज्यानुयोगं लक्षयति। अवसरे यथार्थनिग्रहस्थानोद्भावनातिरिक्तं यन्निग्रहस्थानोद्भावनं तदित्यर्थः एतेनावसरे निग्रहस्थानोद्भावने एकनिग्रहस्थाने निग्रहस्थानान्तरोद्भावने च नातिव्याप्तिः सोऽयं चतुर्धा छलं जातिराभासोऽनवसरग्रहणञ्च आभासो व्यभिचारादावसिद्ध्याद्युद्भावनम् अनवसरग्रहणञ्चाकाले एवोद्भावनं यथा त्यजसि चेत् प्रतिज्ञाहानिः विशेषयसि चेत् हेत्वन्तरं एवमवसरमतीत्य कथनमपि यथा उच्यमानग्राह्यस्यापशब्दादेः परिसमाप्तौ एवमनुक्तग्राह्याज्ञानाद्यननुभाषणावसरेऽनुद्भाव्यबोधाविष्करणानुभाषणप्रवृत्ते वादिनि तदुद्भावनमित्यादिकमूह्यम् ॥ ६५ ॥

असिद्धान्तं लक्षयति। सिद्धान्तं स्वशास्त्रकाराभ्युपगतमर्थं स्वीकृत्य

नियमात्तन्नियमप्रच्यवात् कथाप्रसङ्ग इति तथा च कथायां सौगतसिद्धान्त-प्रच्यवोऽपसिद्धान्तः- तथा च साङ्ख्यमतेनाहं वदिष्यामीत्यभ्युपेत्यारब्धायां कथायाम् आविर्भावस्याविर्भावाभ्युपगमेऽनवस्थेति दूषणोद्धारायाविर्भावस्यासतः उत्पत्तिं यद्यभ्युपैति तदाऽपसिद्धान्तः यस्त्वेकदेशिमतेन कथामारभते तस्य शास्त्रकाराभ्युपगमविरोधे नापसिद्धान्त इति विबोधयितुमभ्युपेत्येत्युक्तं सौगतास्त्वपसिद्धान्तं दूषणं न मन्यत इत्यन्यदेतत् ॥ ६६ ॥

क्रमप्राप्तहेत्वाभासलक्षणे वक्तव्ये तदकथनवीजमाह। च पुनरर्थे हेत्वाभासाः पुनर्यथा येन रूपेण पूर्वमुक्ताः तेनैव रूपेण तेषां निग्रहस्थानत्वमिति न लक्षणान्तरमपेक्षितमिति अत्र चकारस्य दृष्टान्ते साधनवैकल्यादिसमुच्चायकत्वमिति केचित् तन्न यथोक्ता इत्यस्यानन्वयापत्तेरिति ॥ ६७ ॥

समाप्तं निग्रहस्थानविशेषलक्षणम् ।

समाप्तं पञ्चमस्य द्वितीयाह्निकम् ।

एषा मुनिप्रवरगोतमसूत्रवृत्तिः श्रीविश्वनाथकृतिना सुगमाल्पवर्णा ।
श्रीकृष्णचन्द्रचरणाम्बुजपञ्चरीकश्रीमच्छिरोमणिवचः प्रचयैरकारि ॥

इति श्रीमहामहोपाध्याय श्रीविद्यानिवासभट्टाचार्यात्मज श्रीविश्वनाथभट्टाचार्यकृतायां न्यायसूत्रवृत्तौ पञ्चमोऽध्यायः समाप्तः ॥

३ भाषापरिच्छेद मुक्तावलीसहित ... १
४ बहुविवाहवाद .. ।०
५ दशकुमारचरित—सटीक ... १॥०
६ परिभाषेन्दुशेखर ...... ।॥०
७ कविकल्पद्रुम (वोपदेवकृत) ... ॥०
८ चक्रदत्त (वैद्यक) १॥०
९ उणादिसूत्रस-टीक ... २
० मेदिनी कोष ... १
१ पञ्चतन्त्रम् [श्रीविष्णु-शर्म्म-सङ्कलितम्] ... २॥०
२ विद्वन्मोदतरङ्गिणी (चम्पू काव्य) ... ॥०
३ माधवचम्पू ।=
४ तर्कसंग्रह (इंगजी अनुवाद सहित) ॥०
५ प्रसन्नराघव नाटक (श्रीजयदेव कवि रचित) १
६ विवेक चूड़ामणि [श्रीमत् शङ्कराचार्य्य विरचित] ।=
७ काव्यसंग्रह [सम्पूर्ण] ... ५
८ लिङ्गानुशासन—सटीक ... ।०
९ ऋतुसंहार—सटीक ... ।=
० विक्रमोर्वशी—सटीक ... १।
१ वसन्ततिलकभाण ... ।=
२ गायत्री ... ॥०
३ सांख्यदर्शन (भाष्य सहित) सांख्य प्रवचन भाष्य २
४ भोजप्रबन्ध ... ।॥०
५ नलोदय—सटीक ... ॥=
६ ईश केन कठ, प्रश्न मुण्ड, माण्डूक्य, [सटीक स भाष्य] ५
७ छान्दोग्य (उपनिषद्) सभाष्य-सटीक ] ५
- तैत्तिरीय ऐतरेय श्वेताश्वतर (उपनिषद्) सभाष्य सटीक ... ... २
९ वृहदारण्यक (उपनिषद्) [भाष्य सहित] १०
० सुश्रुत ... ४
१ शार्ङ्गधर [वैद्यक] ... १
२ वेतालपञ्चविंशति ... ॥०
३ पातञ्जल दर्शन [सभाष्य-सटीक] ...... ४
४ आत्मतत्त्वविवेक [[illegible]] ... २

